शास्त्रमालायाः चतुर्थं पुष्पम्

मीमांसासाम्राज्यधुरन्धरश्रीशंकरभट्टप्रणीतं

# विधिरसायनदूषणम् ।

वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यापकेन
न्यायव्याकरणाचार्य मीमांसकशिरोमणि
सूर्यनारायण शर्म शुक्लेन संपादितम् ।



१९९४ वैक्रमवत्सरे ।

मूल्यम् १।)

# विधिरसायनदूषणम् ।

शुण्डादण्डविलोडनैरिव मुहुर्द्राग्वारयन्तं जन-
प्रत्यूहानि निशाकरकराघातव्रतं बिभ्रता ।
दन्तद्योतितदिङ्मुखेन हसितेनानन्दयन्तं शिवौ
शान्तं तच्छिशुमाश्रयेऽहमनयोः खेलन्तमाराप्पुनः ॥१॥

वार्तिकोदितविध्यादिलक्षणं दीक्षिताः किल ।
अबुध्वैव निराचक्रुरित्येतदिह वक्ष्यते ॥ २ ॥

अथ'अत्यन्ताप्राप्तियुक्ते' इति प्रथमश्लोकदूषणम् ।

अप्पय्यदीक्षिताः—'विधिरत्यन्तमप्राप्ते' इति भट्टपादीयमपूर्वविधिलक्षणमाक्षिपन्ति 'अत्यन्ताप्राप्तियुक्त' इतिप्रथमश्लोकेन । तस्यार्थः । विधिरत्यन्तमप्राप्ते इत्यत्र अप्राप्ते इति विषयसप्तमी सति सप्तमी वा । आद्ये यो विधिविषयत्वेनान्वेति तस्यैवाप्राप्तिर्वक्तव्या । द्वितीये विधिविषयस्य प्राप्तिसत्त्वेऽपि तदन्यस्य यस्य कस्य चिदप्राप्त्या लक्षणमुपपद्यत इति विशेषः । तत्र विषयसप्तमीपक्षे विधिविषयत्वेनाभिमतस्य सर्वथाऽप्राप्तिर्विवक्षिता उत उद्देश्यसंबन्धित्वेन । आद्ये 'य एवं विद्वानग्निं चिनुते' 'अग्निहोत्रं जुहोति' 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यादिविधिभिः स्वरूपेण प्राप्तानामग्न्यग्निहोत्रप्राजापत्ययागादीनां क्रतुनिमित्तफलादिसम्बन्धार्थेषु 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' 'यावज्जीवमग्निहोत्रं जुहोति' 'चित्रया यजेत पशुकामः' इत्यादिविधिषु, लोकतः स्वरूपेण प्राप्तानां राजसूयादिसंबन्धार्थेषु अक्षैर्दीव्यतीत्यादिविधिषु चाव्याप्तिः । द्वितीये वैकृतेषु अग्निविधिषु अतिग्राह्यविधिषु चाव्याप्तिः स्या-

दिति (१) विषयसप्तमीपक्षे विकल्पद्वयस्यापि दूषणमव्याप्तिः प्राप्तियुक्त इत्यादिना दर्शितम् । तत्राद्यविकल्पदूषणे अग्निविधिशब्देन प्रकृतिविकृतिसाधारणमग्नेः क्रतुसंबन्धविधिमात्रं ग्राह्यम् । आदिशब्देन चाग्निहोत्रप्राजापत्ययागविदेवनादिविधिर्ग्राह्यः । द्वितीयविकल्पदूषणे ऽग्निविधिशब्देनाग्नेर्विकृतिसम्बन्धविधिर्ग्राह्यः आदिशब्देन त्वतिग्राह्यविधिः । सति सप्तमीपक्षे तत्प्राप्तिफलकत्वाविवक्षायां यद् दूषणं तत्पञ्चमश्लोके प्रदर्शयिष्यमाणतया नेह प्रदर्शितम् । तद्विवक्षायां यदव्याप्तिद्वयं तत्त्र्यनीकाभाजोरित्यादिना दर्शितम् । तत्राद्याव्याप्त्युदाहरणे त्र्यनीकाभाजोर्द्वादशाहिकत्र्यनीकान्तर्गतयोरैन्द्रवायवाग्रत्व शुक्राग्रत्वयोरव्याप्तिरित्यर्थः । द्वितीयाव्याप्त्युदाहरणे यत्र गावामयनिकी त्र्यनीका तत्रैव स्वयं प्रवर्तमानतया त्र्यनीकाभाजोरैन्द्रवायवाग्रताविध्योरव्याप्तिरिति ।

तदयुक्तम् । प्रकृतविधेयंदुद्देश्यतावच्छेदकमपूर्वीयत्वान्यत् तेन रूपेणोद्देश्ये यत्प्रकृतविध्यभावेऽतिदेशान्यप्रकृतविधिसमानशाखीयविधितोऽसंभवत्प्राप्तिकं विधेयं भावरूपं तद्विधयो विधिरपूर्वविधिरिति विधिरत्यन्तमप्राप्ते इत्यनेन विवक्षितमिति पूर्वोक्तानामव्याप्तीनां वक्ष्यमाणानामतिव्याप्तीनां चानवकाशात् । तथाहि तत्रापूर्वीयत्वेन रूपेण व्रीहिष्वत्यन्ताप्राप्तमवघातं प्रापयत्यवघातविधावतिव्याप्तिवारणायापूर्वीयत्वान्यदिति विशेषणम् । तदन्यदुद्देश्यतावच्छेदकमवघातादिविधौ व्रीहित्वं, तेन रूपेण च तादृशपुरोडाशविधिनोऽवघातस्य संभवत्प्राप्तिकत्वान्नातिव्याप्तिः । तादृशोद्देश्यतावच्छेदकरूपेणेति विवक्षणात् गवामयनाद्याहर्गतयोर्वायवाग्रताविध्योर्दार्शिकस्वर्गकामविधौ च नाव्याप्तिः तत्र त्र्यनीकाविधितः प्रथमभागत्वेन रूपेण ऐन्द्रवायवाग्रतायाः प्राप्तिसत्त्वेऽपि स्वोद्देश्यतावच्छेदकाहस्त्वेन रूपेण प्राप्त्यभावात् सार्वकाम्यविधिकाम्यत्वेन रूपेणोद्देश्ये स्वर्गे प्राप्तिसंभवे

(१) अत्रोपपादनप्रकारो विधिरसायनादवगन्तव्यः ।

ऽपि स्वर्गत्वेन रूपेण तदभावान्नाव्याप्तिः। समानशाखीयेति विशेषणात् शाखान्तरविधितः सम्भवप्राप्तिकशाखान्तरगताग्निहोत्रादिविधिषु नाव्याप्तिः। यत्र यदुपकारजनकतया यद्विधिस्थितं तत्र तदुपकारजनकतया तस्य याद्दच्छिकया अप्यनुष्ठानयोग्यतापरस्यपरपर्यायायाः प्राप्तेरभावस्य विवक्षितत्वान्न हिरण्यगर्भपूतीकनियमविध्योरतिव्याप्तिः। भावपदोपादानात् अप्राप्तनिवृत्तिप्रापके परिसंख्यादौ नाव्याप्तिरिति इदं लक्षणं सुधीभिरेवमेवान्यत्र संगमनीयम् ।

अथ 'अप्राप्ति प्राप्तिभाजाम्' इति द्वितीयश्लोकदूषणम् ।

दीक्षितैः—उद्देश्यतावच्छेदकरूपेणाप्राप्तिसत्त्वादुद्भाविताव्याप्त्योर्नावकाश इत्याशङ्क्य—'अप्राप्ति प्राप्तिभाजाम्' इति द्वितीयश्लोकेन व्रीहीनवहन्तीत्यत्र नियमविधौ व्रीहीणामपूर्वसाधनत्वोपहितानामेवोद्देश्यतया उद्देश्यतावच्छेदकरूपेणाप्राप्तिसत्त्वादतिव्याप्तिरुक्ता साप्यसङ्गता (१) विधिलक्षणेऽपूर्वीयन्यदिति उद्देश्यतावच्छेदक विशेषणेनातिव्याप्तिवारणसंभवात् ।

---

(१) मयोपलब्धस्य विधिरसायनदूषणपुस्तकस्य प्रथमद्वितीयश्लोकयोस्त्रुटितत्वात् शम्भुभट्टग्रामनूदितं दूषणग्रन्थमवलम्ब्य मया श्लोकद्वयखण्डनदूषणं पूरितम् । मङ्गलश्लोकश्च शङ्करभट्टप्रणीताद्वैतनिर्णयादुद्धृतः ।

# विधिरसायनदूषणम् ।

## मीमांसा साम्राज्यधुरन्धर श्रीशंकरभट्टप्रणीतम् ।

---

अथ 'यूपः सर्वोऽप्यपूर्वं' इति तृतीयश्लोकदूषणम् ।

यत्तु यूपः प्राकृतो वैकृतः सर्वोऽपि तावदाहवनीयादिवदलौकिकः प्रोक्षणादिजन्यादृष्टच्छेदनतक्षणाष्टाश्रीकरणादिजन्यनियमादृष्टरूपानेकादृष्टसंस्कारविशिष्टस्यैव यूपशब्दार्थत्वात्तदुद्देशेन "खादिरो यूपो भवती"ति नियमविधावलौकिकयूपत्वावच्छेदेन खादिरप्राप्त्यभावादपूर्वविधिलक्षणस्य तत्रातिव्याप्तिरिति ।

तदयुक्तं-यत्तावदुक्तं प्रोक्षणजन्यादृष्टतक्षणाष्टाश्रीकरणादिजन्यनियमादृष्टरूपानेकादृष्टसंस्कारसमूहो यूपत्वमिति तत्तावदुपजीव्यग्रन्थविरुद्धम्। दशमे हि 'अर्थाभावे संस्कारत्वं स्यात्' (१०।२।७३) इत्यधिकरणे "न यूपो नामैकः कश्चिदर्थोऽस्ति किन्तु छेदनतक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्तमाना यूपशब्दाभिधेया इति शास्त्रदीपिकायां छेदनादिजन्यदृष्टसंस्कारस्यापि यूपत्वोक्तेः। एवमितः प्राच्यधिकरणे(१)तन्त्ररत्नेऽपि। ततश्च यूपे पशुं बध्नातीत्यनेन पशुबन्धनाधिकरणत्वयोग्यं किमपि द्रव्यं यूप इति सामान्यतोऽवगतेऽपि किं तदवच्छेदकं यूपत्वमित्यनवगते युगपत्प्रवृत्तेषु छेदनादिविधिषु अगत्या यूप इति विशेष्यत्वेनावगतं पशुबन्धनाधिकरणं छेदनखादिरत्वादिभिर्दृष्टेनाञ्जनप्रोक्षणादिभिरदृष्टेन रूपेण भाव्यमित्यवगते नूनमेतान्येव दृष्टादृष्टानि यूपत्वमित्यर्थात्

---

(१) 'खलेवाल्या यूपकार्ये विधीयमानाया दृष्टमेव पश्वनपक्रमणं प्रयोजनम्' इति तत्रात्यो ग्रन्थः ।

सिध्यतीत्यविवादम् । एवं च दृष्टरूपेण भाष्ये पशुबन्धनाधिकरणे छेदनखादिरत्वादि प्राप्तमेव पक्षे न त्वप्राप्तमिति तद्विधौ नातिव्याप्तिः। न हीदं चतुराननेनापि शक्यं वक्तुम् अनवगतं च यूपत्वं तदवच्छिन्ने चोद्देश्ये खदिरादिविधिरिति तस्मान्न तत्रातिव्याप्तिः ।

अथ 'अव्याप्तिः पौर्णमास्यामि'ति चतुर्थश्लोकदूषणम् ।

इदानीम् "अव्याप्तिः पौर्णमास्यामपि" इति चतुर्थश्लोकोक्तमव्याप्तिद्वयं परिह्रियते तत्र ह्युक्तं "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्नि"ति प्रकृत्य "उपांशुयाजमन्तरा यजति" इत्याम्नातमिति दशमान्त्य भाष्यटुप्टीकयोरुक्तम् । तेनोपांशुयाजस्याप्याग्नेयादिवदेवोत्पादके ऽन्तरावाक्ये एव पौर्णमासीकालतावगता अतो विद्वद्वाक्ये फलवाक्ये च तस्यापि ग्रहणं सिध्यति । ततश्चानुपादेयत्वेनोद्देश्ये पौर्णमासीकाले विधेयस्य यागस्य प्राप्तिरेतदभावेप्युत्पत्तिवाक्यपर्यालोचनयार्थाल्लभ्यते इत्युपांशुयाजस्य पौर्णमासीकालेऽप्राप्तिर्नास्तीति तद्विधावपूर्वविधिलक्षणमव्याप्तमिति ।

सेयमव्याप्तिरस्मदुक्तलक्षणं (१) नास्कन्दति। (२) तत्राभ्युपेत्यवादेन तावदुच्यतेऽस्तु नामान्तरावाक्ये न पौर्णमासीत्वं तदवच्छिन्नेऽन्तरावाक्येनाप्राप्तिरस्त्येवेति नाव्याप्तिः पौर्णमासीवाक्ये ।

वस्तुतस्तु नान्तरावाक्येनार्थतोऽपि पौर्णमास्यामुपांशुयाजप्राप्तिरस्ति। यत्तु तत्र हेतुरुक्तः पौर्णमासीवाक्यं प्रकृत्यान्तरावाक्यमाम्नातमिति भाष्यवार्तिकयोरुक्तमिति तदपि विपरीतं यत एव हि पौर्णमासीवाक्यं प्रकृत्याम्नानादन्तरावाक्यं पौर्णमासीविषयमित्युक्तम् । अत

(१) प्रकृतविधेः यद्यदुद्देश्यतावच्छेदकमपूर्वीयत्वान्यत् तेन रूपेणोद्देश्ये प्रकृतविध्यभावे अतिदेशान्येन विधिनाऽसम्भवत्प्राप्तिकं यद्विधेयं तद्विषयो विधिरित्यपूर्वविधिलक्षणमित्यर्थः ।

(२) कुतो नास्कन्दतीत्याह—तत्रेति ।

एव पौर्णमासीवाक्याभावे ऽन्तरावाक्यमात्रान्न पौर्णमास्यामुपांशुयाजः प्राप्नोति 'अतएव दशमेऽन्तरा वाक्यादमावास्यायामप्युपांशुयाजः स्यात्। पौर्णमासीवाक्यं तु तत्कालवर्तिनोऽग्नीषोमदेवताविध्यर्थमिति पूर्वपक्षिते मन्त्रवर्णादेव देवताप्राप्तेः कालविशिष्टयागानुवादे च वाक्यभेदादनन्यविषयेण पौर्णमासीवाक्येन कालविधानादेवममावास्यायां नोपांशुयाज इति सिद्धान्तितम्। इदमेव चोपांशुयाजाधिकरणेऽपि (२।२।६) वार्तिककृतोक्तम्—'सूत्रकारेण च दशमेऽमावास्यायामुपांशुयजमनिच्छतैतदेव पौर्णमासीकालविधिपरत्वेनोपन्यस्तमि'ति (१)। तद्व्याख्याने न्यायसुधायां पौर्णमासीशब्देन 'अनपायश्च कालस्य लक्षणं हि पुरोडाशौ' (१०।८।६६) इत्यनेन न्यायेनैकपुरोडाशायां पौर्णमास्यामिवामावास्यायामप्युपांशुयाजापत्तिः पौर्णमासीविध्यभावे सूचितेति।

वस्तुनस्त्वन्तरावाक्यात्पूर्वोक्तरीत्यैव पाक्षिकत्वेन प्राप्तायाः पौर्णमास्या नियमविधिरयं न यागविधिरयमित्यपूर्वविधित्वाभावादव्याप्त्युक्तिरसबद्धैव।

इदानीं चतुर्थश्लोकस्यैवोत्तरार्द्धोक्ताऽव्याप्तिः परिह्रियते तदर्थं सा तावदनूद्यते—अग्निहोत्रप्रकरणे द्वे आहवनीये चतस्रो गार्हपत्ये चतस्रोऽन्वाहार्यपचने दश सम्पद्यन्ते दशाक्षरा विराट् य एवं विद्वान् विराट्संपन्नमग्निहोत्रं जुहोतीति श्रुतम्। तत्र द्वे आहवनीये इत्यत्राग्निविधिहोमेऽपूर्वविधिरिति सिद्धान्तमुद्रयाऽपूर्वविधावव्याप्तिर्यथाश्रुतलक्षणे इदं हि नाहवनीयविधिराहुतिद्वये यदाहवनीय इति सामान्यशास्त्रेणैव प्राप्तेः नापि विराट्वाक्योक्तदशाहुतिमध्ये

(१) अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् (१०।८।५४) इति सूत्रेण पौर्णमास्यामेवोपांशुयाजः कार्यः मन्त्रस्तु वैष्णवयाज्यानुवाक्यारूपेऽऽमावास्याक्रमाम्नातोपि प्रधानानुसारेण पौर्णमास्यामेव स्यादितिवदतास्यैव कालविधानार्थत्वेनोपन्यासात्तोत्पत्तिवाक्ये कालविधिरित्याशयः इतिन्यायसुधा।

द्वे एवाहवनीये नाष्टाविति परिसंख्यार्थः तासां गार्हपत्यान्वाहार्य-रूपाधिकरणान्तरविधानादेवाहवनीयव्यावृत्तिसिद्धेः किन्तु तासा-माहुतीनामाहुतिद्वयवदग्निहोत्रं जुहुयात् स्वर्गकाम इत्येतद्वाक्यबो-ध्यफलसंबन्धसिद्ध्यर्थं तथा हि द्वे आहवनीय इत्येतदभावे इतरवाक्ये संख्याग्निरूपगुणद्वयबलात्कर्मान्तरविधायके स्याताम् । ततश्चान-योरदृष्टम् 'अग्निहोत्रं जुहोती'त्युत्पन्ने कर्मणि तु दृष्टमग्निहोत्रनाम दृष्ट्वा तस्यैव फलान्वयादनयोस्तदङ्गता स्यात् विराड्वाक्ये तु सर्वसाधारणमग्निहोत्रनामाग्निहोत्रवाक्यविहिते कर्मणि प्रथमावगतेः शतयवश्यंभावेन लिङ्गसमवायाद्ध गौणं 'सप्तदशानि पृष्ठानि' इतिवत् द्वे आहवनीये इत्येतद्वाक्यसत्त्वे तु विराड्वाक्याद्दशाभ्यासेऽग्निहो-त्रस्य तन्मध्ये ऽष्टानामभ्यासानां द्वे आहवनीय इत्याहवनीयं परि-संख्याय तेषामपेक्षितमेवाधिकरणमितराभ्यां वाक्याभ्यां विहितस्यैव होमस्य देवताभेदेनाधारभेदेन चैते दशाभ्यासास्तत्सर्वाभ्याससंयुक्त-स्यैवाग्निहोत्रनाम फलसंबन्धश्च सिध्यति तस्मात् द्वे आहवनीय इत्य-स्यार्थवत्त्वेपि प्रकृतविधिविधेयस्याहवनीयस्य आहुतिद्वयरूपोद्देश्ये ऽप्राप्तिर्नास्तीति तद्विधावव्याप्तिर्यथाश्रुतस्यापूर्वविधिलक्षणस्येति ।

सोयं दीक्षितस्य प्रलापो (१) रीतिकाभरणमिवापातरमणीयोऽप-सिद्धान्तः(२।२।१६)साक्षादाधाराग्निहोत्राधिकरणसिद्धान्तवार्तिकन्यायसुधा ग्रन्थविरुद्धो न्यायविरुद्धश्चोपेक्ष्यः। तथा हि तत्र गार्हपत्यादिसंयोग-स्येत्युपक्रमवार्तिकं यद्यपि को गुण इति संदिग्धं न्यायसुधायां च प्रथमं दीक्षितार्थपरतयैव व्याख्यातं तथापि तत्र यदाहवनीये जुहोति इति प्रत्यक्षे सामान्यविधावुपसंहार एव युक्तश्चतुर्द्धाकरणवत् प्राप्त-परिसंख्यायामपरिहार्यत्रिदोषतापत्तेः । त्रिष्वपि वाक्येषु संख्यैव विधेयेत्येतदाशयाग्रिमवार्तिकविरोधापत्तेश्चापरितुष्यान्यथा व्याख्या-तम् तत्र ह्यग्रिमवार्तिके संख्यया कर्मभेदं शङ्कित्वा प्रयाजैकादशत्ववदनु-

(१) रीतिः स्त्रियामारकूट इत्यमरः। पीतल इति प्रसिद्धः।

त्पत्तिस्थत्वादिति परिहृतं न संख्याविध्यभावादिति न चान्यतः संख्याप्राप्तिरस्ति ।

यत्तूक्तं दीक्षितैर्विराट्त्वाक्यसंख्याविधिरिति तदपि तत्रत्यवार्तिकविरुद्धं तत्रापि दृष्टार्थाग्निसंयोगेन विहितानां द्व्यादीनामाहुतीनां दृष्टार्थाग्निविकल्पापत्त्या तद्द्वारा विकल्पापत्तिमाशङ्क्य सर्वसंख्यासमुच्चयार्थं तत् 'तां चतुर्भिः' इतिवदित्युक्तम् ।

यत्तूत्तरवाक्ययोः संख्यामात्रविधित्वानुपपत्तिरग्निविशेषयोरप्यप्राप्तयोर्विधेयत्वादित्युक्तं दीक्षितैस्तत्परिहृतं न्यायसुधायाम्—गार्हपत्ये जुहोति अन्वाहार्यपचने जुहोति इति वाक्यान्तराभ्यामग्निद्वयप्राप्तेरिति । तस्माद् द्वे आहवनीये इत्यत्रापि वार्तिकोक्तं यथाश्रुतमपूर्वविधिलक्षणं नाव्याप्तं प्रकृतविध्युद्देश्ये अग्निहोत्रहोमे प्रकरणादुपस्थिते, द्विरावृत्तेरप्राप्ताया एव विधेयत्वादिति, चतुर्थश्लोकोक्तमव्याप्तिद्वयं मूलग्रन्थादर्शनतदबोधान्यतरमूलकमित्युपेक्ष्यम् ।

अथ 'आकाङ्क्ष्यादर्थवादात्' इतिपञ्चमश्लोकदूषणम् ।

"आकाङ्क्ष्यादर्थवादात्" इत्यादौ हि पञ्चमश्लोकपूर्वार्द्धेऽव्याप्तिरुक्ता वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः इत्यत्र । अत्र हि विश्वे देवा वै संज्ञाता विश्वानेव देवान् स्वेन भागधेयेनोपधावति त एवास्मै संजातान्प्रयच्छन्ति ग्राम्येव भवतीत्यर्थवादात्प्रकृतविधेयं प्रकृतविध्युद्देश्ये ग्रामे प्रकृतविध्यभावे प्राप्नुयादेवेति तदप्राप्तिघटितस्यापूर्वविधिलक्षणस्य सांग्रहणीविधावव्याप्तिरिति ।

तदत्यन्तासंबद्धम् न ह्यर्थवादोपस्थापितेऽपि प्रकृतविध्युद्देश्ये प्रकृतविधिविधेये प्रकृतविध्यभावे प्राप्नुयादिति संभाव्यते नह्यर्थवादमात्रं विधिनिरपेक्षं फलसंबन्धविधायकमित्युक्तमौदुम्बराधिकरणे रात्रिसत्राधिकरणे च । तदधिकरणविस्मृतिनिदानकं वार्तिकदूषणव्यसनग्रहगृहीतस्य दीक्षितस्यैतदव्याप्त्यभिधानमित्युपेक्ष्यम् ।

यत्तु पञ्चमश्लोकस्यैवोत्तरार्द्धेन "यत्किंचिद्यत्र कुत्रापी"त्यादिना विवक्षाविशेषं प्रागुक्तसर्वाव्याप्तिदोषोद्धाराय कृत्वाऽवघातनियमविधावतिव्याप्त्यापत्त्या दूषितं तत्तादृग् विवक्षां विनाप्यस्मदुक्तविवक्षया प्रागुक्तसर्वाव्याप्तिदोषोद्धारसंभवे वैयर्थ्येनानभ्युपगमादेवापास्तम् ॥

अथ "उद्देश्येऽन्यत्र वा यद्" इति षष्ठश्लोकदूषणम् ।

'उद्देश्येन्यत्र वा यद्' इति षष्ठश्लोके हि ज्योतिष्टोमेन स्वर्गकामो यजेत दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यनयोर्विध्योरव्याप्तिरुक्ता सा यद्यपि स्वकपोलकल्पिते निरुक्तिविशेषे आपादिता तथापि यथाश्रुते विधिरत्यन्तमप्राप्तौ इति वार्तिकोक्ते लक्षणे प्रसज्यते एतद्विधिद्वयाभावेऽप्येतद्विध्युद्देश्ये स्वर्गे एतद्विधिविधेययोर्ज्योतिष्टोमदर्शपूर्णमासेष्ट्योः सार्वकाम्यवाक्यत एव प्राप्यमानत्वसंभवात् तदप्राप्तिगर्भमपूर्वविधिलक्षणमव्याप्तमिति ।

तदप्यस्मदुक्तविवक्षायां न प्रसज्यते तथा हि यद्यपि सार्वकाम्यवाक्येन प्रकृतविधिविधेयस्योद्देश्ये स्वर्गे प्राप्तिः संभाव्यते प्रकृतविध्यभावेऽपि तथापि न प्रकृतविधिविधेयस्योद्देश्यतावच्छेदकं स्वर्गत्वं तेन रूपेण सार्वकाम्यवाक्यात्प्राप्तिः किन्तु काम्यमानत्वरूपेण अतस्तदप्राप्तिगर्भलक्षणं नाव्याप्तमिति ध्येयम् ॥

अथ "नानाशाखाग्निहोत्र" इति सप्तमश्लोकदूषणम् ।

तत्र "नानाशाखाग्निहोत्र" इत्यादिपूर्वोक्ता तावदव्याप्तिः परिह्रियते तदर्थमनूद्यते तावत्सा अग्निहोत्रादिविधयो नानाशाखासु सन्ति तत्रैकशाखागतविध्यभावेऽपि इतरशाखीयविधिनाग्निहोत्रादेस्तत्रत्याङ्गस्येव प्राप्तिः स्यादेव ततश्च तत्तद्विध्यभावेऽन्यतः प्राप्त्यसंभवरूपस्यापूर्वविधिलक्षणप्रविष्टस्य तेष्वभावात्तत्राव्याप्तिरिति ।

साप्येवं परिहर्तव्या येन विधिना प्राप्तिः संभाविता तस्याति-

देशान्यत्वेनेव प्रकृतविधिसमानशास्त्रीयेनेत्यपि विशेषणं विवक्षितम्। प्रकृतविध्यभावे यस्य प्रकृतविधेयस्य प्राप्तिरतिदेशान्येन प्रकृतिविधिसमानशास्त्रीयेन विधिनाऽसंभाविता तद्विषयो विधिरपूर्वविधि'रिति अतो न नानाशास्त्रीयाग्निहोत्रादिषु अव्याप्तिरिति ।

यत्त्वस्मिन्नेव श्लोके उत्तरार्द्धे स्वकपोलकल्पितनिरुक्तिशङ्कापूर्वं नियमविधिपरिसंख्यातिव्याप्त्या दूषणं कृतं तदपि तादृशनिरुक्त्यनङ्गीकारादेव पराहतम् ॥

अथ "तत्तद्विध्यप्रवृत्तौ" इत्यष्टमश्लोकदूषणम् ।

अष्टमश्लोकेऽपि तत्तद्विध्यप्रवृत्तावित्यत्र स्वकपोलकल्पितनिरुक्त्यन्तरशङ्कापूर्वमेव दूषणं कृतं तदपि तादृशनिरुक्त्यनङ्गीकारेणैवाचार्याभिप्रेतास्मदुक्तलक्षणेऽवकाशं नासादयति ॥

अथ "यद्येकानेकविध्यप्रसूतिमुख" इति नवमश्लोकदूषणम् ।

नवमश्लोकेऽपि 'यद्येकानेकविध्यप्रसूतिमुखभवः संकरो लक्षणानामिष्येते'त्यादौ अपूर्वविध्यादिलक्षणानां नियमविध्यादिष्वतिव्याप्तावपि नानालक्षणसमावेशानुसारेणानेकविधिरूपत्वाङ्गीकारे न दोष इत्याशङ्क्य कचित्कचिदनिष्टापादनेन दूषितं तदतिव्याप्त्यादिदोषानापादकलक्षणोक्त्यैवानवकाशत्वादुपेक्ष्यम् ॥

अथ "किञ्चाप्राप्ते सति" इतिदशमश्लोकदूषणम् ।

तत्र हि प्रथममप्राप्तनिवृत्तिरूपाभावप्रापकत्वादिमामगृभ्णन्नित्यादिपरिसंख्यास्वतिव्याप्तिमुक्तामुद्धर्तुमप्राप्तभावप्रापकत्वस्यापूर्वविधिलक्षणे प्रवेशमाशङ्क्य यत्तावदुक्तं निषेधात्मकेषु दीक्षितो न जुहोति न तौ पशौ करोति नातिरात्रे षोडशिनं गृह्णाति इत्यादि सर्वेष्वपूर्वविधिष्वव्याप्तिरिति तत्स्वयमेवाशङ्काद्वारा निरस्तम् । नन्वनुवादप्रतियोगिविधित्वं तेषां विधिरत्यन्तमप्राप्तौ इत्यत्र तु निषेधप्रतियोगिविधित्वं लक्ष्यमिति ।

यत्तु तद्दूषणं कृतम्—अपूर्वविधिषु प्राप्त्यप्राप्तिविवेचनवद्भावाभावविवेचनादर्शनादिति तदाकरास्मृतिमूलकं 'परिसंख्या नियमो वोच्यते विधिरेव त्वेवंजातीयकस्य फलेनैवं व्यपदेश' इति वार्तिकं 'वर्जनबुद्धिः परिसंख्या तद्वाचकः शब्दो नञिति' व्याख्यातं न्यायसुधायाम् ततश्च निवृत्त्यर्थस्य निषेधस्य श्रौतपरिसंख्यात्वोक्त्या परिसंख्यात्वेनानुक्तो विधिस्तद्विरुद्धस्वभावः प्रवृत्त्यर्थ एवेति विपर्ययपर्यवसानाद्भावाभावविषयत्वविवेचनं स्पष्टमेव कृतम् अमुमेवापरितोषं दीक्षितैरनुपदं सूचयित्वोक्तरीत्या निषेधेऽव्याप्तिपरिहारोऽङ्गीकृतः।

यदपि भावाभावगर्भे विधिपरिसंख्यालक्षणे विधिलक्षणं निषेधमुखप्रवृत्तपरिसंख्यायामतिव्याप्तम् यथा शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयतीति। अत्र हि शंय्वन्ततविधानोत्तरं सत्रं निवृत्तं पुनः पत्नीसंयाजा एव न कार्या इति निषेधमुखपरिसंख्यया भावा एव शंयूत्तरा विधीयन्त इति इदं तु दीक्षितैरेव शंय्विडान्तत्वे विकल्पः स्यात् इति दशमे शंय्वन्तसंस्थाविधेर्लाघवेन स्तुत्यर्थमिदमित्युक्तेर्निरस्यैवं विधमन्यदुदाहरणं मृग्यमित्युक्तेरेव तदनुपलब्धिबाधितम् अन्यथेयति वार्तिकदूषणायासेऽप्यश्रान्तैस्तदनुपन्यस्य नैव मुच्येतेति।

यत्तु निषेधमुखभावप्राप्त्यर्थपरिसंख्योदाहरणान्तरं स्मार्तमुक्तं शङ्खस्मृतौ तैजसद्रव्यशुद्धिप्रकरणे "सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च। त्रिःसप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तापनम्॥" इत्यत्र मार्जनवत्तापनस्य विध्यभावात् सर्वतैजसानां तापनाभावे प्राप्ते न तु कांस्यस्य तापनमिति विधिः कांस्यस्यैव तापनं न कार्यम् अन्यस्य तु कार्यमिति परिसंख्यारूपेण तैजसान्तराणां तापनप्राप्त्यर्थः। तथैव व्याख्यातमपरार्केण तैजसानां सूतिकोच्छिष्टादिके स्वल्पोपघाते यवचूर्णादिभिरेकविंशतिवारं मार्जनं न तु कांस्यस्य तापनम्। अर्थात्कांस्यव्यतिरिक्तस्य तापनमपि कार्यमित्यवगम्यते। तथा 'न नीलीवसनं

धार्यं न 'भूपालैरनुत्सवे' इत्यपि स्मृतिरुदाहरणमीदृशे विशेषनिषेधः शेषाभ्यनुज्ञापर इति न्यायात् इति एतदपि मृग्यम् आद्योदाहरणे तावत्तापनस्याप्राप्तस्य निषेधपरिसंख्ययोः क्वापि मीमांसकैरनङ्गीकारात् कांस्यपर्युदासोऽयं कांस्यव्यतिरिक्तस्य तापनं कार्यमिति । यद्यपि पर्युदासोऽपि पर्युदसनीयप्राप्तिसापेक्षस्तथापि तदेकदेशत एव न प्रमाणान्तरत इति विशेषः ।

द्वितीयोदाहरणे तु यद्भूपालैर्न धार्यमित्यनूद्य तदनुत्सव इति पर्युदासेन कालरूपगुणविधिः विशेषनिषेधन्यायस्तु पर्युदासमपि विषयीकरोति ।

यद्वा यत्र पर्युदासो न संभवति स एवास्य न्यायस्य विषयः यथा 'रोगी हीनातिरिक्ताङ्गः' इत्यादि 'कर्मदुष्टाश्च निन्दिता' इत्येते । गुणवत्त्वदोषवत्त्वे हि स्तुतिनिन्दे तत्स्तुत्या विधिरिव निन्दया निषेध एव कल्प्यते न पर्युदासः । न हि पर्युदसनीये दोषोऽस्ति न वा गुणो ऽविहिताप्रतिषिद्धत्वादिति मीमांसकमुद्रा । तथा वामनपुराणे "नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम् । पूर्णासु योषित्परिवर्जनीया भद्रासु सर्वाणि समारभेत' इतिसामान्यनिषेधेऽपि विशेषनिषेधः । बृहस्पतिः—'अमावास्येन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु च । अत्र संनिहितं पापं तैले मांसे भगे क्षुरे ॥' इति । अत्रापि पर्युदासायोगाद्विशेषनिषेधोऽस्य न्यायस्य विषयः । किं च यत्र सामान्यनिषेधे सति विशेषनिषेधा द्वेधाविधिप्राप्तविषया रागप्राप्तविषया वा तत्र पूर्वे तावदनुपलम्भबाधिता इत्युक्तमेव यद्यपि स्युस्तथापि सामान्यविशेषन्यायेन सामान्यनिषेधात्प्रागेव विशेषनिषेधाः प्रवृत्ताः । इमामगृभ्णन्निितिवत्तु तदर्थस्यान्यतः सिद्धौ वैयर्थ्याशङ्कायामिमामगृभ्णन्निितिवदेवेतरानुष्ठानफलकत्वेन प्राप्तपरिसंख्यात्वं त्रिदोषं तदा स्याद्यदि प्रयोजनान्तरं न स्या-

दस्ति तु तत् यथा "मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्" इति सामान्यनिषेधे विशेषनिषेधः 'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति' इति यथा वा श्राद्धे वृन्ताकसामान्यनिषेधः श्वेतवृन्ताकविशेषनिषेधेनोपसंह्रियते इति क्वचिदुपसंहारार्थकता क्वचित्तु दोषविशेषार्थतोक्ता बार्हस्पत्यनिषेधवत्।

यत इतरानुष्ठानरूपं फलमानुषङ्गिकमेव नियमविधिषु तत्तन्नियमनफलेष्टेरेवेतरनिवृत्तिवत्। तदभिप्राय एव च विशेषनिषेधः शेषाभ्यनुज्ञापर इति न्यायः। सोऽयं प्रकारो रागप्राप्तविशेषनिषेधेष्वपि समान इति तत्राव्याप्त्यभिधानं स्मृतिसंप्रदायानध्ययनमेवाविष्करोति दीक्षितानामित्युपरम्यते।

अथ "येनातिव्याप्तिभङ्ग" इत्येकादशश्लोकदूषणम्—

एकादशश्लोके तु 'येनातिव्याप्तिभङ्गः किल नियमविधौ किं तदात्यन्तिकत्वमित्यत्र विधिरत्यन्तमप्राप्ते इत्यप्राप्तेरात्यन्तिकत्वं नियमविधिव्यावृत्त्यै इत्युक्त्वा सर्वोद्देश्यानुवृत्तिरात्यन्तिकत्वमिति कल्पमङ्गीकृत्य तत्रापि प्रायणीयोद्देश्यं यत्किंचिद्विध्युद्देश्यं वेति विकल्प्याद्ये यद्दूषणमुक्तं तदनभ्युपगमादेव परास्तम्।

द्वितीये तु द्वादशाहिकगावामायनिकाग्रताविध्योरव्याप्तेरुन्मज्जनापात इत्युक्त्वा विवृत अग्रतानां स्वविध्युद्देश्येषु द्वादशाहिकगावामायनिकेष्वाद्यद्वितीयेष्वहस्सु सर्वेषु प्राप्तेरेव सत्त्वादिति तथा एकैकस्मै वाम्ये यज्ञक्रतवः इत्यत्राव्याप्तिर्ज्योतिष्टोमदर्शपूर्णमासानां प्राप्तिस्विकफलविधिना स्वर्गार्थत्वप्राप्तेः सर्वोद्देशेष्वप्राप्तेरभावादित्युक्तम् तथाभ्युदयेष्ट्यां त्रेधा तण्डुलान्विभजेदिति विधावव्याप्तिः अत्र हि मध्यमादिरूपेण त्रेधा विभागो न विधेयः ये मध्यमा इत्यादिवाक्यैरेव तत्सिद्धेः। किन्तु

पूर्वदेवताभ्योऽपनयो वा वक्ष्यमाणदेवताभ्यो विभजनं वा विधेयम्। तण्डुलशब्दश्च प्रक्रान्तसर्वहविरुपलक्षणमित्युक्तं षष्ठे ततश्चौषधसान्नाय्ययोर्देवतान्तरविधिनैव प्राप्तो विभाग उपांशुयाजाज्ये च देवतान्तरविध्यभावादप्राप्तोऽसाविति सर्वोद्देश्येष्वप्राप्तेरभावादव्याप्तिरित्युक्तम् एवमव्याप्तिचतुष्टयमेकादशश्लोक उक्तम् ।

तस्यास्मदभिप्रेते लक्षणेऽनवकाशः तथा हि सत्यमात्यन्तिकत्वं सर्वोद्देश्यानुवृत्तित्वमेव तद्यद्यप्राप्तेर्विशेषणमुच्येत तत उक्ता अव्याप्तयः प्रसज्येरन् आत्यन्तिकत्वं तु क्रियाविशेषणं न चाप्राप्तिः क्रिया, अतः प्राप्तिरूपक्रियाविशेषणमात्यन्तिकत्वं दृष्टश्च क्रियाविशेषणत्वान्यथाऽनुपपत्त्या ईदृशानामुपसर्जनीभूतक्रिययाऽन्वयः मन्दं शीघ्रं वा गत इति आगत इति वा ततश्चैवं विशिष्टाभावगर्भो लक्षणार्थः सिद्धः । अतिदेशातिरिक्तप्रमाणेनोद्देश्यतावच्छेदकरूपेण सर्वोद्देश्यानुवृत्ता या प्राप्तिस्तदभाव इति सोऽयं विशिष्टाभावः। क्वचिदाद्यविशेषणाभावात् क्वचिन्मध्यविशेषणाभावात् क्वचिदन्त्यविशेषणाभावात् क्वचिदुभयाभावात् क्वचित्त्रयाभावात् तत्राद्योदाहरणे तावद् द्वादशाहिकाद्यद्वितीयाहोरूपोद्देश्येषु सर्वेष्वग्रतायाः प्राप्तिसत्त्वेऽप्युद्देश्यतावच्छेदकाहस्त्वरूपेण प्राप्तिर्नास्ति किंतु भागत्वेनेति मध्यविशेषणाभावाद्विशिष्टप्राप्त्यभावोऽस्तीति नाव्याप्तिः।एवमेकस्मै वेत्यत्रापि तृतीयोदाहरणे मध्यविशेषणाभावादेव। एवं चतुर्थोदाहरणेऽपि स त्रेधा तण्डुलानित्यत्र हविष्ट्वेनोद्देश्यत्वाद्देवतान्तरविधितस्तु मध्यमादिरूपेण प्राप्तेरुद्देश्यतावच्छेदकरूपेणैवाप्राप्तेर्मध्यविशेषणाभावादेव विशिष्टप्राप्त्यभावोऽस्तीति नाव्याप्तिः। किं वा सर्वोद्देश्येषु या प्राप्तिस्तदभावो द्वेधापि भवति सर्वोद्देश्येष्वप्राप्त्या वा क्वचिदुद्देश्येऽप्राप्त्या वा तत्र विभागवाक्ये आद्यप्रकाराभावेऽपि द्वितीयप्रकारेण सर्वोद्देश्यविषयप्राप्तेरभावोऽस्तीति

नाव्याप्तिः । वस्तुतस्त्वपि वा पौर्णमास्यामिति दाशमिकाधिकरण-विरोधात् षष्ठे उपांशुयाजापनयोक्तिः कृत्वाचिन्तयेति सर्वोद्देश्येष्व-प्राप्तेरभावादव्याप्त्युक्तिः शास्त्रविरुद्धैवोपेक्ष्या ।

अथ 'उद्देश्यव्यापिका सा यदि' इति द्वादशश्लोकदूषणम् ।

द्वादशश्लोके तु 'उद्देश्यव्यापिका सा यदि भवति' इत्यत्र क्वचिदुद्देश्येऽप्यप्राप्तिरितिविवक्षितत्वात् पूर्वार्द्धेऽन्यतिग्राह्यविधिष्व-व्याप्तिः क्वचिदप्युद्देश्येऽप्राप्तेरभावादिति तथा द्वादशाहे पृष्ठ्यः षडह उत्पन्नः स च क्रमेण रथन्तरबृहद्वैरूप्यवैराजशाक्वररैवताख्य पृष्ठस्तोत्रसाधनसामवन्ति षडहानि गवामयने च पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः इतिविधिः तत्राद्ये ह्युद्देश्ये रथन्तरसामत्व-मेकदेशेऽप्यप्राप्तं न, द्वितीये न बृहत्सामत्वमेकदेशेऽप्यप्राप्तं नेति तद्विधावव्याप्तिः । तथात्र फलतो नियमविधावतिव्याप्तिः स्तुतौ हि साक्षात्सामाप्राप्तमपि क्रमप्रकरणाभ्यां स्तोत्राङ्गभूतानामक्षराभिव्यक्तिं कुर्वद्दक्ष्ववतरति ऋक्षु च चातुःस्वर्याद्यपि पक्षे प्राप्तमिति साम-नियमः न चर्क्षुप्राप्तमपि स्तुतावुद्देश्यायां न क्वचिदपि प्राप्तं तथा यदि रथन्तरसामेतिनैमित्तिकोग्रताविधिः स बृहद्रथान्तरान्यसामभ्यस्त-दुभयसामभ्यश्च विकृतिभ्यो निमित्तरहितत्वेन नद्व्यावृत्त्यर्थः फलतः परिसंख्या प्रकृतौ तन्नियमग्रतैतद्विध्यभावेऽपि रथन्तरसाम्न्येव प्राप्ता प्रकरणे पाठाद् बृहत्साम्नीव वैशेषिकथा शुक्राग्रतया बाधात्तेन तत्राति-व्याप्तिः । तथोच्चैरृचा क्रियते इत्यादिस्वरा ऋग्वेदादिविहितकर्माङ्गम् न च साक्षात्कर्मसु स्वरयोगस्तेन कर्माङ्गमन्त्रेष्ववतरति सामवत् मन्त्राणां वा नियतस्वरप्राप्तौ नियमा एते, ततश्चैतद्विधिविधेयस्व राणां पाक्षिकान्वयविषयेषु मन्त्रेषु पाक्षिकप्राप्तिसत्त्वेऽप्युद्देश्येषु कर्मसु कथमपि प्राप्त्यभावात्तद्विधिष्वतिव्याप्तिः । तदेवं द्वादशश्लोकपूर्वार्द्धे तिस्रोऽव्याप्तयस्तिस्रश्चातिव्याप्तय उक्ताः ।

तासामुद्धारस्तूच्यते—तथाहि तत्राग्न्यतिग्राह्यविधिषु तावदतिदेशान्यप्रमाणेनेत्याद्यविशेषणभावादेव प्राप्तेर्विशिष्टाभावोऽस्तीति नाव्याप्तिः । बृहद्रथन्तरसामा कार्य इति तृतीयोदाहरणे तु साम्ना स्तुवीतेनिवदुच्चैर्ऋचा क्रियते इति त्वदुक्तनियमविधिवन्नियमविधित्वस्यैव न्याय्यत्वेनापूर्वविधित्वाभावान्नाव्याप्तिदोषः । साम्ना स्तुवीतेति चतुर्थोदाहरणेऽपि नियमविधौ नातिव्याप्तिः । साम हि चर्क्षु प्राप्तं सत्तद्द्वारैव स्तुनावप्युद्देश्यायां पाक्षिकप्राप्तमेवेति नाप्राप्तिगर्भं लक्षणं तत्रातिव्याप्तम् । एवं पञ्चमोदाहरणेपि उच्चैर्ऋचा क्रियते इत्यादौ मन्त्रमुखेनैव कर्मसूद्देश्येषु पाक्षिकप्राप्तिसत्त्वात् स्वराणामिति तुल्यम् । यदि रथन्तरं सामेति चतुर्थोदाहरणं निमित्ताभावेन विकृतावनतिदेशेपि न परिसंख्या—अनन्यार्थलोपाद्विकृतौ प्राकृतपदार्थबाधेपि तत्प्रसङ्गादर्थनिमित्तयोरविशेषात् किन्त्वपूर्वविधेरेवायम् । रथन्तरसामत्वरूपोद्देश्यतावच्छेदकरूपेणैतदग्रतायाः प्राप्त्यभावात् । फलं तु चोदकाप्रवृत्तिरस्तु नाम । न तावत्प्रकृतावपूर्वविधित्वमस्यापगच्छति तल्लक्षणलक्षितत्वात् । न च वार्तिकोक्तलक्षणेनापाद्यपरिसंख्यात्वमतिव्याप्त्युक्तिरिति वाच्यम् । तत्र चान्यत्रेति तत्र शब्दस्योद्देश्यपरामर्शपक्षे हि तत्स्यान्न विधेयपरामर्शपक्षे प्रकृतिः रथन्तरसामा वात्रोद्देश्यो न विकृतिः समानविध्यभावादतो न परिसंख्येयं तेनातिव्याप्त्युक्तिर्भ्रान्तिमूलैव । किंचान्तरङ्गविधेः प्रयोजनं न बहिरङ्गं यथा नियमविधौ नेतरव्यावृत्तिः । तेनात्र यागविधाविव कायिकानुष्ठाने विशेषाभावेपि मानसेऽनुष्ठानेऽस्ति विशेषः । यदि रथन्तरसामेति विध्यभावे हि नैमित्तिकतयानुष्ठानं न स्यात् । सति तु तथानुष्ठानं सिध्यति । यथाग्निहोत्रे पाक्षिकदध्यनुष्ठानाविशेषेपि दध्नेन्द्रियकामस्येति विधिः फलोद्देश्यकानुष्ठानार्थो भवति । तेन तदेवान्तरङ्गत्वात् प्रयोजनं न बहिरङ्गमानुषङ्गिकमातिदेशिकम् । रथन्तरसामोभयसामविकृतिवर्जनमिति न तत्प्रयुक्तपरि-

संख्यान्यवहारं लभते । किं तु दध्नेन्द्रियकामस्येतिवदपूर्वविधित्वमिति । तत्र लक्षणसत्त्वं गुण एवेत्यनवद्यम् ।

यत्तु—द्वादशश्लोकोत्तरार्द्धे त्रैकालिकत्वमप्राप्तेरात्यन्तिकत्वमित्याशङ्क्यापवादापवादरूपे कृष्णलचरौ घृते श्रपयतीत्यत्र पूषा प्रपिष्टभाग इत्यत्र चापूर्वेवावभृथेऽवर्हिषः प्रयाजान्यजतीति प्रयाजविधावव्याप्तिरित्युक्तं तत्—त्रैकालिकत्वरूपात्यन्तिकत्वानभ्युपगमादेव निरस्तम् ।

अथ "युज्येतापाक्षिकत्वं तत्" त्रयोदशश्लोकदूषणम् ।

यत्तु—त्रयोदशे श्लोके 'युज्येतापाक्षिकत्वं तदिति यदि निरुच्येत तत्पाक्षिकत्वम्'इत्यत्रापाक्षिकत्वमप्राप्तेरात्यन्तिकत्वमिति निरुक्तिमाशङ्क्य सार्वकाम्यादिविधिष्वव्याप्तिरित्युक्तं तदपि तादृशनिरुक्त्यनङ्गीकारादेव परास्तम् ।

अथ "तद्भिन्नत्वं निवेश्यं यदि" इति चतुर्दशश्लोकदूषणम् ।

चतुर्दशे श्लोके तु तद्भिन्नत्वं निवेश्यं यदीत्यत्र पूर्वार्द्धे पूर्वनिरुक्तावेवोक्तदोषोद्धारार्थं विशेषणमाशङ्क्य निरस्तं तदपि पूर्वनिरुक्त्यनङ्गीकारादेवापहस्तितम् । तदुत्तरार्द्धेऽपाक्षिकत्वरूपे पूर्वोक्ते आत्यन्तिकत्वनिर्वचन एव पूर्वार्द्धोक्तकतिचिन्नियमविध्यतिव्याप्तिदोषोद्धारार्थं विशेपणान्तरमाशङ्क्य निरस्तं तदप्यनङ्गीकारपराहतमेव ।

अथ 'यद्युच्येतान्तरेण' इति पञ्चदशश्लोकदूषणम् ।

पञ्चदशे श्लोके तु यद्युच्येतान्तरेणेत्यत्राशङ्कितम् । आश्रयभेदं विना प्राप्तिकर्तृवितत्वं पाक्षिकत्वं तदभावोऽप्राप्तेरात्यन्तिकत्वमेकस्मिन्नेव विषये प्राप्त्यप्राप्त्योः सत्त्वं पाक्षिकत्वं तदभाव इत्यर्थः । ततश्चावघातादिनियम्याप्राप्तेरेकस्मिन्नाश्रये व्रीह्यादौ प्राप्तिकर्म्बिततया पाक्षिकत्वान्न नियमविधिष्वतिव्याप्तिः । नापि सार्वकाम्यादिविधिष्वव्याप्तिः । तेषु सर्वेषु स्वर्गाद्याश्रयभेदेनैव प्राप्त्यप्राप्त्योः

करंवितत्वादिति विवरणग्रन्थे त्रयोदशश्लोकप्रभृतिसर्वास्वपाक्षिकत्व निरुक्तिषूक्तानां सर्वेषां दोषाणामुद्धारकरं निरुक्तिविशेषमाशङ्क्य दूषितम् । नत्त्रिषु विधिष्वव्याप्तिरुक्ता । द्वयोर्नियमविध्योरतिव्याप्तिरुक्ता । तथा ह्युपहव्येऽश्वो दक्षिणा शातपेये सोमचमसो दक्षिणोभयत्रापि ब्रह्मणे देय इति विहितयोरव्याप्तिः । अश्वस्य प्राकृतदक्षिणास्थानापत्तेः सर्वर्त्विग्भ्यो दानप्राप्तेरेकस्य तस्यैकदेशो ब्रह्मणे प्राप्त एकदेशश्च न प्राप्त इति प्राप्त्यप्राप्त्योर्मेलनात् । यथा कृष्णलचरौ सर्वं ब्रह्मणे परिहरतीति भक्षापनयविधौ तद्वदेवातिव्याप्तिः इत्यव्याप्तयतिस्त्रः । अथातिव्याप्ती पूतीकनियमे तावत्सोमेन सुसदृशानामेवान्येषां बहुवयवानुग्रहात्प्राप्तावीषत्सदृशानां पूतीकानां पाक्षिकप्राप्तिरहितानामेव विधिस्तेनाप्राप्तेः प्राप्तिमिश्रत्वाभावादतिव्याप्तिः । तथा वायव्यपशौ हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति नियमेपि । अयमुत्तराघार एव प्रकृतौ तत्रैवेन्द्रमूर्ध्वमिति मन्त्रजन्य नियमादृष्टवक्लृप्तेर्मन्त्रमात्रविधौ लाघवात्पूर्वाघारे तदवक्लृप्तेस्तत्कल्पनगौरवादित्युक्तं दशमे । तत्र हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गादिति सूत्रकृतैव हिरण्यगर्भपदस्य प्रजापतावेव रूढतोक्तेः । सिद्धान्ते तु वैधाङ्गत्वनिर्वाहायेन्द्रेपि कथं चिन्मन्त्रं योजयितुं तस्मिन्नपि स्रुष्टेः प्रागेकत्वेन सत्त्वं मन्त्रान्तरोक्तं युक्तम् । तेन तस्मिन्नप्राप्तमन्त्रनियमेऽतिव्याप्तिः । एवम् ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादिष्वपीत्युक्त्वोक्तम् । इयं वाव्याप्तिरतिव्याप्तिश्च प्राचीनेष्वप्यात्यन्तिकत्वनिर्वचनेषु तुल्येति ।

एते च दोषा एतच्छ्लोकोक्तनिर्वचनानङ्गीकृतेरेव न परिहर्तव्याः स्युर्यदिपूर्वोक्तपक्षतुलया न स्युः । पूर्वोक्तनिर्वचनपक्षतुल्यतोक्तेस्तु परिह्रियन्ते । तत्राद्यनिर्वचनं दीक्षितोक्तं सर्वोद्देश्यानुवृत्तत्वमात्यन्तिकत्वमप्राप्तेर्यद्यङ्गीक्रियते यदि वास्मदुक्तो विशिष्टाभावः सर्वोद्देश्येषु या प्राप्तिस्तदभाव इति उभयथापि ब्रह्मसम्बन्धवाक्ये नाव्याप्तिः ।

इयं ह्यव्याप्तिरापाद्योक्त्या भवतोक्ता। अवश्यं पञ्चदशर्त्विगन्तरसंबन्धस्य न पाक्षिक्यपि प्राप्तिरस्तीति नियमविधित्वायोगादपूर्वविधित्वापादनेन न च तद्युक्तं पाक्षिकत्वं ह्यन्त्ये पक्षे भवता निरुक्तं तत्तत्रास्तीति भवतैवोक्तमिति नियमविधित्वसम्भवादपूर्वविधित्वापादनेनाव्याप्त्युक्तिः प्रलापमात्रम्। एवमेवाद्यपक्षेपि विधेयतावच्छेदकाश्वत्वरूपेण ब्रह्मसम्बन्धस्य प्राप्तत्वात्। न च ब्रह्मसम्बन्धस्य नित्यप्राप्तेः पाक्षिकत्वान्नियमविधित्वानुपपत्तेरपूर्वविधित्वमापाद्यम्। एवं हि परिसंख्याविधित्वमापाद्यं न त्वपूर्वविधित्वं प्राप्तेरेव सत्त्वात् स्वयमपि च दीक्षितैः सप्तमश्लोकविवरणे औदुम्बरो यूपो भवतीत्यादिवैकृतेषु द्रव्यविधिष्वपि सर्वद्रव्यविधयो नियमविधय इति मीमांसकमर्यादया नियमविधित्वेन समर्थनीया इत्युक्तम्। ततोप्येतेऽश्वादिविधयो नियमविधय एवेति तेष्वव्याप्त्युक्तिः स्वोक्तमर्यादा विरुद्धापि। किंच—नियमविधिदूषणेपि दीक्षितैरुक्तं यथा खलु हिरण्यगर्भमन्त्रस्य दृष्टार्थत्वान्नियमादृष्टकल्पनावश्यंभावाच्च नियमविधित्वमभ्युपगम्यते। तथेषेत्वेति मन्त्रस्य शाखाच्छेदने तीक्ष्णाग्रस्योत्करस्य वाजिनासादने ननीयसः परिधेः पशुनियोजने च विधीना मुक्तहेतुभ्यां नियमविधित्वमङ्गीकार्यमेवेति तद्विरुद्धाप्यश्वादिविधिष्वपूर्वविधित्वोक्तिस्तल्लक्षणाव्याप्त्युक्तिश्च तेषु तस्मान्नाव्याप्तिः।

यत्त्वन्त्यं पूतीकहिरण्यगर्भमन्त्रनियमयोरतिव्याप्तिद्वयमुक्तं तदपि वार्तिकार्थापरिशीलनमूलकम्। तथा हि यद्यङ्गत्वेन वैधी या प्राप्तिस्तदभावोत्र विवक्ष्येत ततः स्यादेवम्। ईषत्सदृशपूतीकगताल्पावयवानामत्यन्तसदृशगतबह्ववयवसंभवेऽङ्गत्वेनाप्राप्तेः हिरण्यगर्भमन्त्रस्य च लिङ्गादङ्गत्वेनाप्राप्तेः यथा कथंचित्तु या प्राप्तिस्तदभावोत्र विवक्षितः। न चैवं यादृच्छिकेष्टसाधनविभ्रमाद्वा व्रीहिप्रोक्षणादेरपि प्राप्तिसंभवादव्याप्तिरसंभवो वा यागहोमादेरपि स्वेच्छया कथंचित्प्राप्तिसंभवादिति वाच्यम्। प्रकृत-

विध्युद्देश्ये प्रकृतविधेयस्य यदुपकारजनकतया यादृच्छिक्यपि प्राप्ति-स्तदभावस्य विवक्षितत्वात् । न च यागहोमव्रीहिप्रोक्षणादेस्तादृशी प्राप्तिरस्ति । पूतीकानां तु यागनिष्पादकतया नियम्यानां तथैव प्राप्ति र्यादृच्छिकी संभवति अङ्गत्वेन प्राप्त्यभावेपि । एवं हिरण्यगर्भमन्त्र स्यालिङ्गादङ्गत्वेन प्राप्त्यभावेपि स्मारकतया नियम्यलाक्षणिकालक्ष-णिकलौकिकध्यानादिवद् यादृच्छिकी स्मारकतयैव प्राप्तिर्विदलनादिव-त्संभवतीतिनियमविधिनाप्युपपन्ना अनुपपन्ना चातिव्याप्तिरपूर्वविधि लक्षणस्येति । न चेयं यादृच्छिकी पूतीकहिरण्यगर्भमन्त्रयोः प्राप्तिः सुसदृशत्येन्द्र उर्ध्वं इति मन्त्रस्य च वैधप्राप्त्या निवर्तितेति वाच्यम् । अङ्गत्वेनुष्ठानमेव हि विधानैर्विधिभिरितरस्य तादृशमनुष्ठानमेव निवर्त्यते न यादृच्छिकी प्राप्तिरपि । प्राप्तशब्दश्चेह प्राप्तबाधोऽप्राप्त-बाध इत्यादिवन्न शास्त्रीयज्ञानपरः किन्त्वनुष्ठानयोग्यतारूपप्रसक्ति-परः ।यथा वैधयागार्थक्रयक्रीते सोमे यथेष्टविनियोज्यत्वरूपत्वात्तस्य दानाद्यपि शक्यते कर्तुं तथेहापि । अत एवार्धमन्तर्वेदीत्यत्रोक्तमर्द्धं-मन्तर्वेदीति विधावपि अर्धान्तरस्य विधित एव व्यावृत्तिः स्याद्य-दृच्छया त्वन्तर्वेदि बहिर्वेदि वाऽर्धान्तरस्य मानप्रसक्तौ बहिर्वेदीत्यपि विधातव्यं स्यादिति वाक्यभेद इति ।

विधिरसायनकीर्तितवार्तिकोदितजरद्विधिलक्षणदूषणे ।
सुविहितं न विभावनया विना प्रतिविधानमनादरमर्हति ॥

इतिश्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीभट्टनारा-
यणात्मजभट्टशंकरकृतौ विधिरसायनदूषणे
वार्तिकोक्तापूर्वविधिलक्षणदूषणोद्धारः ।

## अथ नियमविधिलक्षणाक्षेपपरिहार. ।

अथ "हेतुः कुत्रापि" इति षोडशश्लोकानुवादः—

अनिर्द्धारिताप्राप्तांशस्य पूरणं यत्तत्फलको विधिर्नियमविधिः 'नियमः पाक्षिके सती'ति यथाश्रुते षोडशश्लोकेन 'हेतुः कुत्रापि कार्यम्' इत्यादिनाऽव्याप्तय उक्ताः। तद्यथा क्वचिन्नियम्येऽवहननादौ पाक्षिके नियमः क्वचित्प्रतिसम्बन्धिनि पाक्षिके नियमः। यथा विकृतिविशेषे वामदेव्यादिपृष्ठविधौ साममात्रस्य स्तोत्राङ्गत्वावगमे तन्निर्वाहाय तद्योनिः प्रकरणेऽपठितास्यर्थादङ्गत्वं प्राप्तावुत्तरयोरेव प्रकरणापठित-योरपि नियमः। यजुर्युक्तं रथमित्यादिषु तूभयनियमः। एवंश्रुते त्रिधा नियमः। तथानुपात्तेपि त्रिधा। यथा पुरोडाशं प्रथयतीत्यत्रानुपात्तो कर्त्तरि नियम्ये उच्चैर्ऋचा क्रियत इत्यत्रानुपात्ते नियम्योद्देश्ये मन्त्रे नियमः। व्रीहिभिर्यजेतेत्यत्र नियम्येऽवहनने तदुद्देश्येषु वानु पात्तेषु यवेषु नियमः। एवमुपात्तमनुपात्तमिति द्विविधमप्युदा-हृतं नियम्य जातं पक्षप्राप्तमदृष्टं क्वचिन्नियम्यस्य पक्षप्राप्त्यभावेपि तत्प्रतिद्वन्द्विना पक्षप्राप्तिमात्रेण नियमो दृश्यते। यथा यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति पूतीकान्यसुसदृशानामेव पाक्षिकप्राप्तेः। क्वचित्किमपि पक्षप्राप्तं न दृश्यते। यथा हिरण्यगर्भः समवर्तताग्र इत्याद्या अघारमाघारयतीति नियमितश्चोदकादैन्द्रमन्त्रप्राप्तेः एवमिषेत्वे-ति शाखां छिनत्ति उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेति विलिङ्गस्य मन्त्रस्य शाखाच्छेदने तीक्ष्णाग्रस्योत्करस्य वाजिनासादने तनीयसः परिधेः पशुनियोजने पक्षप्राप्त्यभावात्। एवं त्रिवृत्य संक्षेपत उपसंहृतं दीक्षितैः। इत्थं नानारूपा नियम विधयः कथमनेन संग्रहीतुं शक्याः। पाक्षिके सतीत्यस्य कार्योपायद्वयपाक्षिकपरत्वे एकैकनियमाव्याप्तेः। कार्यस्यैवोपायस्यैव वा पाक्षिकत्वपरत्वेऽन्यतर-नियमाव्याप्तेः। कार्योपायद्वयमनुगमय्य विध्युपात्तस्य पाक्षिकत्व-परत्वे विध्यनुपात्तनियमाव्याप्तेरुपात्तमनुपात्तं वा नुगमय्य नियम्यस्य

पाक्षिकत्वपरत्वोक्तौ नियमस्यप्रतिद्वन्द्विनामेव पाक्षिकत्ववति नियमविधावव्याप्तेर्नियमस्यस्यान्यस्य वा यस्य कस्य चित्पाक्षिकपरत्वोक्तावपि पाक्षिकत्वमात्ररहितेषु नियमविधिष्वव्याप्तेरिति।

अथ 'तच्चातिव्याप्तम्' इति सप्तदशश्लोकानुवादः

एवं षोडशश्लोकेनाव्याप्तोर्यथाश्रुते उक्त्वा तत्रैव सप्तदशश्लोकेन 'तच्चातिव्याप्तम्'इत्यादिनातिव्याप्तीरुक्त्वा सर्वं तदुद्धारायाशङ्कितम्। स्यादेतत्—यस्य कस्यचिदप्राप्तांशपूरणफलो नियमविधिरिति लक्षणं तथा सति न क्वाप्यतिव्याप्तिरिति चेदितिग्रन्थेन। ततस्तदपि दूषितं सार्वकाम्यविध्यतिव्याप्त्या प्रातिस्विकवाक्येन स्वर्गार्थत्वे प्राप्ते तस्य तदप्राप्तफलान्तरांशपूरणार्थत्वादिति ग्रन्थेन। ततस्तदुद्धाराय शङ्कितमनिर्द्धारितत्वमप्राप्तांशस्य विशेषणं क्रियते तथा च सर्वकाम्यविधौ स्वर्गांशः प्राप्तस्तदन्यफलांशस्त्वप्राप्त इति निर्द्धारणसद्भावान्नातिव्याप्तिः। नाप्यसंभवः। व्रीह्यादिष्ववहननाद्यप्राप्तांशस्येदंतया निर्धारणाभावादिति।

अथ 'अप्राप्तत्वं विरोधि' इत्याष्टादशश्लोकानुवादः।

एवमाशङ्क्याष्टादशश्लोकोत्तरार्द्धे दूषणमुक्तम्'अप्राप्तांशं विशेष्टुमि'त्यादौ। अश्वः श्यावो दक्षिणेत्युपहव्यदक्षिणां विधाय श्रुते स ब्रह्मणे देय इति तथा शतकृष्णलमायुष्कामेष्टौ सर्वं ब्रह्मणे परिहरतीति विधावौदुम्बरश्चमसो दक्षिणेति दक्षिणां विधाय ऋतपेये श्रुते स ब्रह्मणे देय इति विधौ चातिव्याप्तिः। सर्वर्त्विक्साधारणेष्वश्वसोमचमसहविः शेषेष्वयं ब्रह्मणोंऽशः अयमन्येषामिति निर्धारणासंभवात्।

तदिदं ब्रह्मसंबन्धविधिष्वतिव्याप्तिरितिदूषणं दीक्षितानामत्यन्तानवबोधमूलकम्। विध्याक्षेपार्थपञ्चदशश्लोकनिबद्धदूषणोद्धार एव ह्यस्माभिरेतेषां ब्रह्मसम्बन्धविधीनां नियमविधित्वमेव नापूर्वविधित्व-

मित्युपपादितं पूर्वापरविरोधादयश्च दीक्षितानामुक्ताः। नियमविधित्वसाधकानि चोक्तानि दृष्टार्थत्वद्रव्यविधित्वनियमादृष्टसङ्गत्वादीनि। तस्मादौदुम्बरो यूपो भवतीत्यादिवैकृतद्रव्यविधयो ये सप्तमश्लोकविवरणे दीक्षितैर्नियमविधित्वेनोक्तास्तथा षोडशे श्लोके नियमविधित्वेनाभ्युपेता ये हिरण्यगर्भादिमन्त्रविधयस्तन्मुद्रामुद्रितत्वाद् ब्रह्मसंबधविधयोपि नियमविधय एवेति तत्र नियमविधिलक्षणसत्त्वं भूषणमेव न तु दूषणमिति सुष्ठूक्तं लक्षणं नियमविधेः। नन्वेवमपि यस्य कस्यचित्पाक्षिकत्वे सति यो विधिः स नियमविधिरिति षोडशश्लोकविवरणान्ते सर्वाव्याप्तिपरिहाराय नियमविधिलक्षणमाशङ्क्य यत्रोपात्तमनुपात्तं वा नियम्ये तत्प्रतिद्वन्द्विक उद्देश्ये वा किमपि पक्षप्राप्तं न दृश्यते। यथा हिरण्यगर्भमन्त्रविधाविषेत्वेति मन्त्रविधावुत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेति तत्राव्याप्तिरुक्ता नच सोक्तलक्षणे परिह्रियते सर्वथाऽप्राप्तावप्राप्तांशपदार्थाभावात्। अत एवोक्तलक्षणाशङ्कायां दीक्षितैरुक्तम्। तथा सति न क्वाप्यतिव्याप्तिरिति चेदिति न त्वव्याप्त्युद्धारोऽप्युक्त इति। अन्यथाऽव्याप्त्युद्धारोप्युच्येतेति। उच्यते। एष्वप्युदाहरणेष्वस्माभिः पाक्षिकप्राप्तिसत्त्वं पञ्चदशश्लोकदूषणावसर एवोपपादितमिति न किंचिदेतत्। नन्वेवमप्येषूदाहरणेषु पाक्षिकप्राप्तिसत्त्वेन तद्गर्भमेव लक्षणमुच्यतां किमप्राप्तांशपूरणगर्भलक्षणाङ्गीकरणेनेति चेन्न—यस्य कस्य चित्पाक्षिकप्राप्तौ यो विधिः स नियमविधिरित्युक्ते सर्वेष्वपूर्वविधिपरिसंख्याविधिष्वतिव्याप्तिरुक्ता। सप्तदशश्लोके नानाविधातिव्याप्तिष्वन्त्या तस्या उद्धारायोक्तलक्षणाङ्गीकारादिति सर्वमनवद्यम्।

इतिश्रीमत्पदवाक्यप्रमाणपारावारपारीणभट्टनारायणात्मजभट्टशंकरकृते विधिरसायनदूषणे नियमविधिलक्षणाक्षेपोद्धारः।

# अथ परिसंख्यालक्षणाक्षेपपरिहारः ।

अथ तत्रान्यत्रेति' 'प्राप्तिः शेषिद्वये' 'तत्रान्यत्रापि' 'योऽप्यस्तत्रैव' इति
१९-२०-२१-२२ श्लोकोक्ताक्षेपपरिहारः—

'तत्रचान्यत्र च प्राप्त'इत्यनेन यत्किंचिन्निवृत्तिफलको विधिः परिसंख्येति विवक्षितम्। तद्धि लक्षणं यथाश्रुते एकोनविंशतितम-श्लोकोक्तानामव्याप्तीनां विंशतितमश्लोकपूर्वार्द्धोक्तानामव्याप्तीनां तदुत्तरार्द्धोक्तानां चातिव्याप्तीनामेकविंशतितमश्लोकोक्तानां चाति-व्याप्तीनां परिहारार्थमिति स्वयमेवोक्तं दीक्षितै द्वाविंशतितमश्लोक-पातनिकायाम् ।

स्यादेतत्—तत्र चान्यत्र च प्राप्ते तदन्यतरनिवृत्तिफलको विधिः परिसंख्येति विवक्ष्यते । तथा चोदाहृतेष्वप्राप्तविषयेषु चतुः षडहादि-विधिषु तत्तत्प्राप्तेरेव फलत्वेन पक्षप्राप्तविषयेषु चावहननादिविधिषु तत्तन्नियमस्यैव फलत्वेन निवृत्तेरानुषङ्गिकत्वान्नातिव्याप्तिरिति ग्रन्थेन ततो द्वाविंशतितमे श्लोके योऽप्यस्तत्रवेत्यादावाद्यपादेन तत्र चान्यत्र च प्राप्त इत्याद्यदलवैयर्थ्यमुक्तं तदभ्युपगच्छामः ।

यत्तु—तद्दलाभ्युपगमेन तस्याप्युक्तयानिषेधेत्यादिपादद्वयेन निषे-धात्मकेष्वपूर्वविधिषु नियमविधिषु च केषुचिदतिव्याप्तिरित्युक्तम् । तत्तु सर्वेषां निषेधानां परिसंख्यात्वस्येवेष्टत्वात्परास्तम् ।

यत्तु—तत्रापि दूषणमुक्तं 'गृह्यन्ते तेपि लक्ष्या यदि'इत्यादिना तद्विवरणं त्वेवं कृतम्। यदि निवृत्तिफलको विधिः परिसंख्येत्येवं लक्षणं क्रियते ततोऽग्निहोमादिविधावतिव्याप्तिः। अकरणनिवृत्तिफलत्वात् । यदि तु तत्परिहारार्थं करणाकरणयोः समुच्चित्य प्राप्ताविति विशेष्यते । ततो यावज्जीवमग्निहोत्रं जुहोतीत्यादिविधावतिव्याप्तिः।

नैमित्तकत्वाभावे उत्पत्तिविधिफलविधिभ्यां काम्यत्वेन करणाकरणयोः समुच्चित्य प्राप्तेरिति। तस्य स्वयमेव दीक्षितैरुद्धार आशङ्कामिषेण कृतः। न चात्र निवृत्तिपदेनाभावरूपैव निवृत्तिर्विवक्षितेति शक्यं वक्तुमिति ग्रन्थेन।

यत्त्वत्र दूषणमुक्तं प्रागुदाहृतनिषेधपूर्वपरिसंख्यास्वनुष्ठानफलास्वव्याप्तिप्रसङ्गदित्यनेन। तस्य दूषणमस्माभिर्दशमश्लोकदूषणावसर एव कृतम्। निषेधपूर्वा हि परिसंख्या सामान्यनिषेधे सति विशेषनिषेधरूपाः प्रागुदाहृता भवता। तासु च विशेषनिषेधः शेषाभ्यनुज्ञाफलो भवतीति न्यायेनेतरानुष्ठानफलकत्वं भवतोक्तम्। तच्चास्माभिर्दूषितम्। तादृशा हि निषेधा विधिप्राप्तविषया वा स्युः। रागप्राप्तविषया वा। तत्र पूर्वे तावदनुपलम्भबाधिता इत्युक्तम्। यद्यपि स्युस्तथापि सामान्यविशेषशास्त्रन्यायेन सामान्यनिषेधात्प्रागेव विशेषनिषेधाः प्रवृत्ताः। इमामगृभ्णन्निर्तिवत्तु तदर्थस्यान्यतः सिद्धौ वैयर्थ्याशङ्कायामिमामगृभ्णन्नितिवदेवेतरानुष्ठानफलकत्वेन प्राप्तपरिसंख्यात्वं त्रिदोषं तदा स्याद्यदि प्रयोजनान्तरं न स्यात्। अस्ति तु तदुपसंहारो वा दोषविशेषार्थता वेति। अत इतरानुष्ठानरूपं फलमानुषङ्गिकमेव नियमविधिषु तत्तन्नियमफलेष्वेवेतरनिवृत्तिवत्। तदभिप्राय एव च विशेषनिषेधशेषाभ्यनुज्ञापर इति न्यायः। सोयं प्रकारो रागप्राप्तनिषेधेष्वपि समानः। तस्मादभावरूपनिवृत्तिफलो विधिः परिसंख्येति लक्षणं सिद्धम्।

इतिश्रीमत्पदवाक्यप्रमाणपारावारपारीणभट्टनारायणात्मजभट्टशंकरकृते विधिरसायनदूषणे परिसंख्यालक्षणाक्षेपोद्धारः।

## अथ त्रिविधविधिलक्षणाक्षेपपरस्परातिदेशपरिहारः—

अथ "पूर्वाक्षेपप्रकार" इति त्रयोविंशतितमश्लोकदूषणम् ।

यत्तु "पूर्वाक्षेपप्रकार" इत्यादित्रयोविंशतितमश्लोकविवरणे तद्यथा पाक्षिके सतीत्यत्र विधिविषयस्य पाक्षिकत्वं विवक्षितं यस्य कस्य चिद्वेति विधिलक्षणदूषणप्रथमश्लोक इव विकल्प्य दूषणं कार्यमित्यतिदिश्य तत्कृतं विकृतिविशेषगतरथन्तरपृष्ठनियमविधौ तथा पुरोडाशे कर्तृनियमार्थे प्रथनविधावव्याप्त्याद्युक्त्या तत्सर्वं यथाश्रुत एव प्रसज्ज्यते न त्वप्राप्तांशपूरणफलकत्वरूपे विवक्षिते ऽस्मदुक्ते लक्षणे उक्तविध्यो रथन्तरप्रथनकर्त्रोरप्राप्तांशपूरणं यत्तत्फलकत्वसत्वात् । ततो विवक्षाविशेषं स्वयं विकल्प्यामनहोमेष्वतिव्याप्तिरुक्ता साप्युक्तलक्षणे नायाति । ततो विवक्षाविशेषं कृत्वोपांशु यजुषेति नियमे ऽव्याप्तिरुक्ता साप्यस्माभिर्द्वादशश्लोकदूषणे निरस्ता । एवमादिः सर्वोऽपूर्वविधिलक्षणे उक्तान्विकल्पानतिदिश्य यो दूषणगण उक्तः पाक्षिकत्वगर्भ एव लक्षणे स तदनङ्गीकरणादेवापास्तो वेदितव्यः । तत एवं विधिनियमलक्षणाक्षेपप्रकारः प्रायेण परिसंख्याविधिमप्यवस्कन्दतीत्यादिना तत्र चान्यत्र चेति यथाश्रुत एव परिसंख्यालक्षणे नियमविधिलक्षणदूषणप्रकारातिदेशः कृतस्तत एवमपूर्वविधिलक्षणाक्षेपप्रकारोऽपि परिसंख्याविधिलक्षणमवस्कन्दितुं प्रभवतीत्यादिना यथाश्रुत एव परिसंख्यालक्षणापूर्वविधिलक्षणप्रकारातिदेशः कृतस्तदुभयमपि यथाश्रुतपरिसंख्यालक्षणानङ्गीकृत्यैव पराहतम् ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणभट्टनारायणात्मजभट्टशंकरकृते विधिरसायनदूषणे त्रिविधविधिलक्षणाक्षेपपरस्परातिदेशदूषणम् ।

## अपूर्वादिविध्युदाहरणाक्षेपपरिहारः

अथ "उत्पश्यामो न चोदाहरण" इति चतुर्विंशतितमश्लोकदूषणम्।

अथ 'उत्पश्यामो नचोदाहरणगणमपि' इत्यादिना' चतुर्विंशतितमश्लोकेन वार्तिकोक्तापूर्वविध्याद्युदाहरणदूषणं कृतम्। तत्र—यत्तावदुक्तं व्रीहीन् प्रोक्षतीत्यपूर्वविध्युदाहरणं वार्तिककृदुक्तमयुक्तम्। दर्शपूर्णमासप्रकरणेन तदपूर्वार्थत्वेनावगतस्याग्नये जुष्टं प्रोक्षाम्याग्नीषोमाभ्यामित्यादि मन्त्रस्य देवतार्थद्रव्यप्रोक्षणलिङ्गबलाद्धविः प्रोक्षणद्वारेण तादर्थ्यं स्यादिति। तत एव हविः प्रोक्षणकर्त्तव्यता प्राप्यते किं व्रीहीन्प्रोक्षतीतिविधिना। अङ्गीकृतश्च दशमे षड्भिर्दीक्षयतीत्यग्निप्रकरणगतविधिना दीक्षार्थतयाऽवगतानामाकूतिमग्निं प्रयुजं स्वाहेत्यादिमन्त्राणां स्वाहाकारलिङ्गबलाद्धोमद्वारेण तादर्थ्यसिद्धेस्तत एव होमकर्त्तव्यता प्राप्यत इति।

तदिदमसारम् स्वाहाशब्दस्य हि होमवाचित्वादव्यभिचारिलिङ्गादाकूतिमग्निमित्यादिमन्त्राणां युक्तं पूर्वावगतस्यैव होमस्यावृत्तिकल्पनया दीक्षार्थत्वं प्रोक्षणमन्त्रस्य तु व्रीहिसम्बन्धितया प्रोक्षणप्रकाशकत्वं नास्ति। किन्तु हविर्मात्रसम्बन्धितयैव तेन पुरोडाशस्यैव जुष्टत्वान्मन्त्रवर्णेन प्राप्नुवत्प्रोक्षणं पुरोडाशस्यैव प्राप्नुयान्न व्रीहीणामतस्तेषां प्रोक्षणविधिरर्थवानेवेति।

यत्तु—तदनन्तरं नियमविध्युदाहरणदूषणं कृतं न व्रीहीनवहन्तीतिनियमविध्युदाहरणं युक्तम्। अवरक्षोदिवः सपत्नं वध्यासमिति मन्त्रस्यावघातप्रकाशनेनैव लिङ्गात्प्रकरणाच्च दर्शांगत्वे नित्यवदवधारिते तत एव पुरोडाशीयद्रव्यत्रैतुष्यार्थमनियतप्राप्तस्यावघातस्य नियमलाभात्। अयमपि न्यायस्तृतीये सिद्धः। तत्र हि भक्षानुवाकसमाख्या भक्षसंबन्धित्वेनावगतयोर्भक्षानुवाकमध्यपठितयोर-

श्विनोस्त्वा बाहुभ्यां सभ्यासम्। नृचक्षसं त्वा देव सोम सुचक्षा अव- ख्येषमिति मन्त्रयोर्ग्रहणावेक्षणलिङ्गबलात्तद्द्वारा भक्षसम्बन्धित्वं स्यादिति तत एव परहस्तगतं सोमपात्रमगृहीत्वाप्यनवेक्ष्यापि भक्ष- यितुं शक्यत्वेनानियतप्राप्तयोर्ग्रहणावेक्षणयोर्नियमोऽङ्गीकृतः। किं चैतानि वै दशयज्ञायुधानीति यज्ञपात्रत्वेनावगतयोरुलूखलमुसलयो- र्वारणो यज्ञावचर इति विहितवारणताकयोरुत्पत्तिशिष्टपुरोडाशाद्य- वरुद्धेष्वाग्नेयादियागेषु साक्षात् साधनत्वासंभवात्किंचिद्द्वारा निर्वाहणीयमिति तद्द्वारत्वेन नित्यकर्त्तव्योऽवघातः प्राप्यते। न च यज्ञायुधानि संभरतीति विहितसादनद्वारैवोलूखलमुसलयोर्यज्ञसा- धनत्वं स्यादिति वाच्यम् अग्रे तयोर्दृष्टकार्याभावे तत्प्रत्यासत्त्यर्थस्य सादनस्यादृष्टार्थतापत्तेः दृष्टार्थत्वसम्भवे च तदयोगात्। स्फ्येनोद्ध- न्तीत्यादिविनियुक्तस्फ्याद्यंशे दृष्टार्थं सादनमुलूखलमुसलांशे चादृष्टा- र्थमिति साधनविधिवैरूप्यापत्तेश्च। अतस्तस्योलूखलमुसलदृष्टका- र्यविनियोगापेक्षत्वात्तत्सामर्थ्यादर्थप्राप्तावघातनियमो लभ्यते इति व्यर्थस्तन्नियमविधिरिति।

तदेतत्तुच्छम्। यस्तावद्दृष्टान्त उक्तोऽयमपि न्यायस्तृतीये सिद्ध इत्यादिना। तद्वैषम्यमुच्यते। यथाहि तत्रैवोक्तं सम्यग्जरणपर्यन्तं च भक्षणं स्वरसतो लोकसिद्धं तादृशमेव सोमप्रतिपत्त्यर्थतया विधीयत इति। तथा भक्षोपि लोके उत्सर्गतो गृहीत्वावेक्ष्यैव प्राप्तः स्वरसतः कुणित्वान्धत्वादिकारणान्तरात्त्वन्यथा भवति। अतो ग्रहणमवेक्षणं च भक्षार्थतयैव नित्यमाक्षिप्तम्। नतु तस्य नित्यत्वं नित्यवदाम्नातमन्त्रबलात्कल्प्यते। वैतुष्यं तु लोके न नित्यमवघातसाध्यतया प्राप्तं किंत्वनेकैरुपायैरतस्तादृशमेव पुरोडाशाक्षिप्तवैतुष्येणाक्षिप्तं तत्तादृशं च पाक्षिकमेव मन्त्रप्रका- श्यत्वं प्रतिपत्स्यते। पाक्षिकाक्षेपस्योपजीव्यत्वेन प्राथमिकत्वेन प्रधानभूतप्रकाश्यविषयत्वेन च तदनुरोधेनैवोपजीवकस्यानन्तर-

प्रवृत्तस्य गुणभूतस्यैव मन्त्रस्य पाक्षिकतयैव विनियोगो न्याय्य एव। नित्यवदाम्नातभङ्गो भिन्ने जुहोतीतिवत्। अन्यथा दर्शपूर्णमासप्रकरणे नित्यवदाम्नातस्य पूषानुमन्त्रणमन्त्रादेरप्यङ्गत्वबलात्तन्निर्वाहाय तत्प्रकाश्यस्य पूषादेरपि दर्शपूर्णमासयोरेव समवायः कल्प्येत। यद्यप्यनुमन्त्रयत्वेन मन्त्रस्य देवतात्वेन च पूष्णः समवायो न संभवेत्तथाप्यनुमन्त्रणसमाख्यां बाधित्वा प्रकाश्यत्वेनैव कर्मसमवायः कल्प्येत यथोलूखलमुसलयोः प्रागुक्तेन दीक्षितग्रन्थेन च यज्ञायुधानि संभरतीति विहितसादनद्वारैवोलूखलमुसलयोर्यज्ञसाधनत्वं स्यादिति शङ्कितम्। न च तत्रोक्ते दूषणे अत्र प्रसज्येते सादनस्यादृष्टार्थत्वापत्तेर्वैरूप्यापत्तेश्चेत्येते। मन्त्रस्य प्रकाशनरूपदृष्टमात्रार्थत्वात्। प्रकाशनस्य तु परमदृष्टार्थत्वं तच्च प्रकरणप्रमाणबलान्न्याय्यमेव। वरं च तदुत्कर्षात्। अतो मन्त्रबलालाभादवघात-नित्यतासिद्धिः। किं च मन्त्रबलादुलूखलमुसलासादनदृष्टार्थताबलाच्चावघातनित्यताक्षेपेऽप्यवघातविध्यभावे न चाविहितमङ्गं भवतीति न्यायेन तस्याङ्गता न स्यात्। मन्त्रोलूखलादृष्टार्थतानिर्वाहाकतयोपकारकतामात्रं स्यादिति तद्भ्रेषेऽङ्गभ्रेषनिमित्तं प्रायश्चित्तं न स्यात्। विधौ तु सत्यङ्गत्वात्तल्लोपेऽङ्गभ्रेषनिमित्तं प्रायश्चित्तं भवतीति न विधिवैयर्थ्यमित्यवघातनियमविधिदूषणं दीक्षितानां तुच्छमित्यलम्।

अथ 'तस्मादत्रोभयस्मिन्' इति पञ्चविंशतितमश्लोकदूषणम्।

तदेवं प्रोक्षणेऽपूर्वविधेरवहन्तौ च नियमविधेरुपपत्तौ यदेवं बुद्धमेवानुष्ठितमभ्युदयकारि भवतीत्येवंपरतां प्रोक्षणावहन्तिविध्योराशङ्क्य 'तस्मादत्रोभयस्मिन्न्यवपरिहृतये पारिसंख्यो विधिः स्यादि'त्यादिना पञ्चविंशतितमश्लोकेन दूषणं कृतं तदुगर्भस्त्रावेणैव गलितम्। अत एवोभयोरपि कर्तृविधित्वापादनमप्यत्र श्लोके कृतम-

संबद्धमेव यः मन्त्रादिबलाद्धि कल्पितविधिना प्रोक्षणावघातयोः प्राप्तौ कल्पितविधेः समाख्याविषयत्वाभावादप्राप्ताध्वर्युकर्तृप्राप्त्यर्थः श्रुतविधिः स्यात् । यदा तु मन्त्रादिबलात्प्राप्तिः प्रोक्षणावघातयोर्न संभवतीत्युपपादितम् तदा तत्प्राप्त्यर्थाविती विधी न समाख्याद्वारकानुपात्तकर्त्रर्थाविति युक्तमिति ।

अथ 'एवं चाश्वाभिधानीग्रह' इतिषड्विंशतितमश्लोकदूषणम्—

यत्तु—'एवं चाश्वाभिधानीग्रहविधिरपि तत्कर्तृनैयत्यमात्रप्राप्त्यर्थः पर्यवस्येत्प्रथनविधिरिव प्राप्तमन्त्रानुवादौ' इत्यादिषड्विंशतितमश्लोकमुक्त्वा तत्तात्पर्यं व्याख्यातम् । विध्यन्तरावकाशसत्त्वे जघन्यं परिसंख्यात्वं न स्वीकार्यमिति प्रागुक्तम् । प्रोक्षणावघातविध्योश्च कर्तृनियमप्राप्त्यर्थतया चारितार्थ्यमुक्तम् तेन न्यायेन परिसंख्योदाहरणेऽपि कर्तृनियमार्थतैव स्यादर्थप्राप्ते ग्रहणेऽध्वर्योः पाक्षिकत्वेन नियमविध्यवकाशसत्त्वात् । तत्र मन्त्रग्रहणं कर्तृनियमार्थे प्रथनविधाविव लिङ्गप्राप्तमन्त्रस्यानुवादकं स्यादिति ।

तदिदं परिसंख्योदाहरणदूषणमप्ययुक्तम् । तथा हि न तावद्दृष्टान्ते प्रथनं नियमेन प्राप्तं येन तद्विधिरध्वर्युकर्तृनियमार्थः स्यात् । तदुक्तिस्तु मन्त्राधिकरणेऽभ्युपेत्यवादमात्रम् ।

यत्त्विमामगृभ्णन्निति विधौ दार्ष्टान्तिके एकादशप्रयाजान्यजतीत्यादौ चोदकप्राप्तप्रयाजादिवदर्थप्राप्तग्रहणानुवादं विशिष्टविधिगौरवपरिहारार्थं स्वीकृत्य तत्र संख्यावदिह मन्त्र एव विधीयतामित्याशङ्क्य दूषणमुक्तम् । किं ग्रहणमात्रे मन्त्रविधिरश्वभिधानीविशिष्टे वा । आद्ये मन्त्रलिङ्गादेव प्राप्तिसंभवाद्विधिवैयर्थ्यम् । द्वितीये तु विशिष्टानुवादाद्वाक्यभेदापत्तेर्विशेषणाविवक्षायां विधिवैयर्थ्यमेव । अश्वाभिधानीमात्रे मन्त्रविधावप्युक्त एव दोषोऽश्वविशेषणस्याविवक्षितत्वात् । तस्माद्विशिष्टविधिगौरवादिह नार्थं-

प्राप्तग्रहणविधेः कर्तृनियमार्थतयाऽर्थवत्त्वसंभवात्फलतः कर्तृनियम एवायं फलतः परिसंख्येति।

तदप्ययुक्तम्—विधवैयर्थ्यप्रसङ्गादेव विशिष्टानुवादस्वीकृतेः। न ब्राह्मणं हन्यादित्यादौ चान्योन्यं विना नैराकांक्ष्याभावे विशिष्टानुवादस्य नञ्टीकायामुक्तेः। न चाध्वर्युकर्तृकत्वनियमार्थत्तयाऽप्यर्थवत्वान्न विधवैयर्थ्यमितिवाच्यम् तथा सति मन्त्रानुवादसम्भवेऽप्यश्वाभिधान्युद्देशेन ग्रहणविधिः स्यात्तत्र चाश्वेन विशेषणे वाक्यभेदापत्तिरशिष्टा। तच्च तव ममेव विशिष्टानुवादस्वीकृतिविधिवैयर्थ्यप्रसङ्गोऽस्ति। गर्दभरशनाया अपि ग्रहणस्याध्वर्युकर्तृकत्वनियमाय विध्युपपत्तेरश्वशब्दस्य गर्दभोपलक्षकत्वेनानुवादत्वसम्भवात्। तस्मादेतद्दोषपरिहारार्थमपि नायं विधिः कर्तृनियमार्थः किन्तु विधिवैयर्थापत्तेर्विशिष्टानुवादं स्वीकृत्य मन्त्रविधिरेव परिसंख्याफलक इति युक्तम्। किं च यथाव्रीहिविधौ सति तमुपजीव्य प्रवृत्तोऽपि योवघातविधिस्तस्यैव अवघातनियमः फलं न व्रीहिविधेः यथा वा यागविधौ सति तमुपजीव्य प्रवृत्तोऽपि यो व्रीह्यादिविधिस्तस्यैव व्रीह्यादिनियमः फलं न यागविधेस्तस्माद्यथा व्रीहिविधेरवघातविधितः फलान्तरं मृग्यं तद्वद् ग्रहणविधौ सति तमुपजीव्य प्रवृत्तयाध्वर्युसमाख्यया कल्पितस्याध्वर्युविधेः कर्तृनियमः फलं न ग्रहणविधेस्तस्य त्वध्वर्युविधितः फलान्तरं मृग्यं तच्च न मन्त्रपरिसंख्यातोन्यल्लभ्यते। साक्ष्याभावे ह्यगत्या विध्यन्तरफलेनापि फलवत्ता स्वीक्रियेत न तु साक्षात्फलान्तरसम्भवेऽपीति। किं च तवानर्थक एव मन्त्रानुवादो मम तु विधेयार्थकतयैवार्थवान् आदत्त इत्यप्युद्देशार्थत्वादर्थवदेव। न च विध्युद्देशान्तर्गतिसंभवेऽत्यन्तानर्थक्यं युक्तम्। तदुक्तमुद्भिदधिकरणसिद्धान्ते विध्युद्देशसंभविनश्च स्तुत्युपयोगित्वं न युज्यत इति। विध्युद्देशसंभविनश्च स्तुत्यर्थत्वायोगोक्त्या तत्संभविना आनर्थक्यायोगः सुतरामयुक्त इति कैमुतिकन्यायेनोक्तं भवति। एवं सति

यत्र सर्वथाविध्युद्देशान्तर्भावासंभवस्तत्रागत्या क्वचिदनर्थक्यमप्यनुवादस्याप्यङ्गीकृतम्। यथा सप्तदशारत्निवाक्ये वाजपेयस्येति यथा वा प्राजापत्येषु पर्यग्निकृतानुत्सृजन्तीत्यस्यैकादशे।

अथ 'उद्देश्योऽत्राश्व'इतिसप्तविंशतितमश्लोकदूषणम्॥

यस्तु—षड्विंशतितमश्लोकोक्तदूषणोद्धारोऽन्यथा स्वयमेवाशङ्कितः स्यादेतन्माभून्मन्त्रश्वाभिधानीविशिष्टग्रहणविधिरश्वाभिधानीग्रहणोद्देश्येन मन्त्रविधिरश्वाभिधान्युद्देशेन मन्त्रविधिर्वा अश्वमात्रोद्देशेन मन्त्रविधिस्तु स्यात्। तत्र विशिष्टविधिगौरवस्य विशिष्टानुवादकृतवाक्यभेदस्य चाप्रसक्तेः रशनाग्रहणप्रकाशकस्य च मन्त्रस्य साक्षादश्वार्थत्वायोगात्तदीयरशनाग्रहणद्वारकत्वं पर्यवस्यतीत्यर्थसिद्धार्थानुवादः परमभिधानीमादत्त इति अस्य चार्थस्य लिङ्गादेव प्राप्तेर्गर्दभरशनातो मन्त्रपरिसंख्यैव फलमित्येवमाशङ्क्य'उद्देश्योऽत्राश्व एवेत्यपि न फलवती'त्यादिना सप्तविंशतितमश्लोकेन दूषणं कृतम्। नैवम्। श्रौतधात्वर्थविधित्यागेन वाक्यीयमन्त्रविध्ययोगान्मन्त्रविधिफलात्परिसंख्यानाद्ग्रहणविधिफलस्य कर्तृनियमस्याभ्यर्हितत्वाच्चेति। तथा गर्दभरशनातो मन्त्रपरिसंख्यादोषत्रयवतीत्यग्रे वक्ष्यते विध्यनर्हविधिमूला च। क्रियामन्तर्भाव्य मन्त्राश्वसम्बन्धस्य विधातुमयोग्यत्वात्तस्मात्कर्तृनियमफलकत्वमेव न्याय्यमिति।

तदप्ययुक्तम् व्रीहिभिर्यजेतेत्यादौ व्रीह्युपादानानर्थक्यस्येव मन्त्रोपादानानर्थक्यपरिहारायैव श्रौतस्यापि धात्वर्थविधेस्त्यागाद्वाक्यार्थविधेश्चाङ्गीकारात्। अत एव कर्तृनियमस्याभ्यर्हितस्यापि त्यागेन परिसंख्याया अपि स्वीकारात्। परिसंख्या चेह नत्रिदोषेति ग्रहैकत्वाधिकरणवार्तिकविसंमत्यादिना वक्ष्यते। न च मन्त्राश्वसम्बन्धो विध्यनर्हस्तत्प्रतीतिरेव क्रियामनन्तर्भाव्य न भवति

विधिस्तु तात्पर्यात्तन्मात्रपरोपि संभवत्येव प्रकाशाध्वर्युसम्बन्धवत् अत एवाघाराग्निहोत्राधिकरणे प्रातीतिको विशिष्टविधिरेव सर्वत्र तत्त्वमित्युक्तम् । अन्यथा दध्यादिविधिरपि क्रियामनन्तर्भाव्य दुर्घट एव स्यादिति ।

अथ 'यद्व्रीहिप्रोक्षणादेः' इत्यष्टाविंशतितमश्लोकदूषणम् ।

यत्तु—प्रोक्षणावघातमन्त्रे आध्वर्यवसमाख्या अध्वर्यूच्चार्ये- प्रोक्षाम्यवध्यासमित्युत्तमपुरुषेण प्रतीयमानमन्त्रोच्चारपितृकत्वस्य बाधकाभावेन त्यागायोगादिति स्वयमेव प्रागुक्तम् । कर्तृनियमार्थत्वं प्रोक्षणावघातविध्योः स्वयमेव दूषयित्वा यवपरिसंख्यार्थत्वमेव नापूर्वनियमविधित्वमित्युक्त्वा ननु तथा सति व्रीहिशास्त्रं व्यर्थं स्यात्प्रोक्षणावघातविध्योर्व्रीहिपदस्यापूर्वीयत्वलक्षणया यवसा- धारण्यापादनेनैव तस्य फलत्वादित्याशङ्क्य तस्याश्वशफपरि- माणपुरोडाशोत्पादनासमर्थाल्पव्रीहिलाभे प्रतिनिध्यनुपादनार्थत्व- संभवे यवसाधारण्यापादनफलकत्वस्यायोगादिति निरस्य प्रोक्षणावघातविध्योरपूर्वसाधनलक्षणादूषणेनापि यवसाधारण्या- पादनार्थता व्रीहिशास्त्रस्यायुक्तेत्यष्टाविंशतितमश्लोकेन "यद्व्रीहिप्रोक्षा- णादेर्यवमपि विषयं तन्वते तच्च चिन्त्यम्"इत्यादिना । तस्यार्थः प्रया- जादिवत्प्रोक्षणावघातयोः प्रकरणेन दर्शपूर्णमासापूर्वाङ्गत्वाद्व्रीहिद्वारा च तयोरङ्गत्वात्तदपूर्वीयाणामेवार्थात् लौकिकत्यागेन द्वारत्वात् न चात्र न चायं नियमोस्ति यदपूर्वीय एव रूपे संस्कारविधिर्न श्रुत इति तप्ते पयसि दध्यानयतीत्यत्र श्रुते पयस्येव दध्यानयनविधौ पश्चात्पयसः सेति तच्छब्देनापूर्वीयत्वावगत्याऽर्थात् संस्कारस्या पूर्वीयत्वाङ्गीकारात् । इयांस्तु भेदस्तत्र द्रव्यस्यापूर्वार्थत्वेऽर्थात्सं- स्कारस्यापूर्वार्थत्वबोधः । प्रोक्षणादौ तु विपरीतमिति श्रौतान्वय- स्तुल्य एव । यस्योभावग्नी अभिनिम्लोचेदभ्युदियाद्वा पुनराधेय

तस्य प्रायश्चित्तिरित्यत्र विधेयाग्निद्वयोत्पादकाधानसामर्थ्यादुभया-भ्यनुगमननिमित्तत्वलाभो यथैवं विधेयं प्रोक्षणादिभूतभाव्युपयोग-शून्यलौकिकव्रीहिविषयं भवितुं न योग्यमिति विधेयसामर्थ्यादपूर्वी-यत्वलाभः संभवति । अन्यथा चापूर्वीयमात्रं जूकादिसाधारणं, तच प्रणात्मिकोपेते नु तस्मिन्विवक्षिते विशिष्टानुवाददोषः । किं च यदि व्रीहिषूक्तं प्रोक्षणाद्यपूर्वीयत्वलक्षणा पायसेष्वपि स्यात्तदा सोमे विहितं क्रयादिफलचमसेऽप्युपदेशत एव स्यात् नित्यानित्य-संयोगविरोधाद्वा तत्रसमानविधेः प्रतिनिधेरपि मुख्येन सह तदा-पत्तिः। तस्मात्प्रतिनिधेर्मुख्यसामान्यविध्यनैमित्तिकस्य नित्यसमान-विध्यभावं च व्यवस्थयाऽभ्युपगच्छद्भिर्मीमांसकैः संस्कारवाक्येषु व्रीहिसोमादिपदानामपूर्वीयत्वलक्षणां हित्वा मुख्यार्थत्वमेवाङ्गीकृत्य प्रतिनिधिगतमुख्यावयवानां व्रीह्यादिगततदवयवानामिवं व्रीह्यादि-पदविषयत्वान्मुख्यसमानविषयम् । न च फलचमसस्य सोमपद-विषयत्वाभावान्न सोमसमानविषयत्वमित्येव व्यवस्थोपपाद्या । नैमि-त्तिकमत्तुल्यत्वादसमानविधानं स्यादिति प्रतिनिधिश्च तद्वदिति च तार्तीयाधिकरणद्वयं चैवं परमेव। नैमित्तिकमित्यत्र नित्यानित्यसं-योगविरोधोस्त्वपूर्वीयत्वलक्षणामभ्युपेत्य। नन्वपूर्वीयत्वलक्षणाया-मपि फलचमससामानविध्यन्ताभावश्च प्रतिनिधेर्युक्तः । नित्यानि-त्यसंयोगविरोधप्रसङ्गतदप्रसङ्गौ हि तत्र न हेतू किंतु द्विरुक्तिप्रस-ङ्गाप्रसङ्गौ न हि नित्यं नैमित्तिकं च युगपद्विधीयेते किं तु नित्यमादौ पश्चादितरत्। तत्र नित्यविधिवेलायमिव तदेकवाक्यतया व्यापृतानां संस्कारविधीनां न पुनः पश्चादपि व्यापारो न्याय्यः। मुख्यप्रतिनिध्योस्तु विध्यैक्यान्नायं द्विरुक्तिप्रसङ्ग इति मैवम्। व्रीहि-तुल्यकालतत्संस्कारविधीनां व्रीहिविधितः प्रागपूर्वीयत्वानवगतेस्तल्ल-क्षणायोगात् । न च व्रीहिविध्युत्तरं तर्हि तल्लक्षणा स्यात्। एवं हि व्रीहिविधितुल्यकालमेव प्रवृत्तियोग्यस्य संस्कारविधेर्यवसाधारण्या-

र्थमेव व्रीहिविध्युत्तरं प्रवृत्तिः स्यात्ततो नित्यधर्माणामपि नैमित्तक-साधारण्यार्थमेव तद्विध्युत्तरकाला प्रवृत्तिः स्यात्—

वस्तुतस्तु—व्रीहिविधिर्व्रीहित्वजात्यवच्छिन्नसाधनतया विधत्ते न तु व्रीहिभावयोग्यान्नीवारगतावयवान् पश्चात्तु नित्यप्रवृत्त-प्रधानविधितो यत्किंद्रव्याक्षेपप्रसक्तेर्व्रीहित्वानवच्छिन्नापि तदवच्छे-द्यत्वयोग्या मुख्यसन्निकृष्टानीवारस्था एवाक्षिप्यन्ते इति तेषाम-पूर्वीयत्वं सिद्ध्यति। पूताकेष्टीषत्सदृशेष्टे तन्न्यायापवादो वचनादेवेति न युगपन्मुख्यप्रतिनिध्योर्विधिः। एवं नित्यनैमित्तकयोरपीति न मुख्यप्रतिनिधिनैषम्यम्। नन्वेवं व्रीहिविधाविव तत्संस्कारविधावपि व्रीहिपदस्य मुख्यार्थत्वात्प्रतिनिधिसाधारण्यं न स्यात्। न संस्काराणां प्रकरणात् प्रधानापूर्वार्थत्वे तन्निर्वाहाय पूर्वतनव्रीहि-विधिनेव पश्चात्तनन्यायेन नीवारगतव्रीहिभावयोग्यावयवानामपू-र्वविधित्वात्तदाकाङ्क्षावशादुभयसाधारण्यव्रीहित्वावच्छेदयोग्यमात्र-लक्षणाङ्गीकारात् फलचमसे तु सोमत्वावच्छेदयोग्यत्वस्याप्य-भावान्न साधारणव्रीहित्वावच्छेदयोग्यमात्रलक्षणाङ्गीकारात् फलच-मसे तु सोमत्वावच्छेदयोग्यत्वस्याप्यभावान्न साधारणलक्षणोक्तिभेदः अत एव व्रीहिमन्त्रः प्रतिनिधौ नोह्यः। किं च व्रीहिधर्मा अपूर्वीय-त्वलक्षणया यवेष्वपि चेत्स्युस्ततो बृहद्रथन्तरधर्मा मीलनसमुद्र-ध्यानादयोपि संकीर्येन्।

अथ तत्र निर्देशभेदाद् व्यवस्था—तदुक्तम् नवमे निर्देशाद्-व्यवतिष्ठेरन्निति इदं तु नास्तीति चेत् न निर्देशभेदेपि तवा-पूर्वीयत्वलक्षणया तावन्मात्रविवक्षायां सांकर्यापत्तेः। स्वरूपस्या-प्यादरे विशिष्टोद्देशापत्तेः। नन्वयं दोषोऽग्निसूर्यवाक्ययोरपि। सायं-प्रातर्विशिष्टहोमोद्देशात्तुल्यः। न च सायं प्रातः शब्दावेव लक्षणया तत्तत्कालीनमेव होममुद्देश्यमर्पयतः जुहोतिस्त्वनुवादमात्रमिति

वाच्यम् । होमभेदाभावेन सायंप्रातःकालोपलक्षितहोमस्य प्रातःसायंकालयोरप्यनपायात् 'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ' इतिन्यायादग्निसूर्यसांकर्यापत्तेः। तस्मात्तत्र निर्देशमात्रादेव यथा व्यवस्था तथा रथन्तरबृहद्धर्मेष्वपि स्यात्।

मैवम्—तत्राग्निर्ज्योतिज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति वचनविनियुक्तमन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिमात्रविधानेऽन्यतरस्यार्थवादत्वात्। न च वाच्यं मिश्रलिङ्गमन्त्रविधिपर्युदस्तशुद्धलिङ्गमन्त्रप्रतिप्रसवार्थं तद्विधिरिति ब्राह्मणेनैवाग्निसूर्यविधिरिति। अग्निवाक्येनाग्नेः सायंहोमे सूर्यवाक्येन च सूर्यस्य प्रातर्होमे च व्यवस्थया विधौ सति शुद्धलिङ्गमन्त्रद्वयमेव सायंप्रातर्होमयोर्लिङ्गाद् व्यवस्थया प्राप्तं न तु मिश्रलिङ्गमन्त्रद्वयं लिङ्गाविशेषादित्यपेक्षिततद्व्यवस्थार्थत्वेन सप्रयोजनस्य मिश्रलिङ्गमन्त्रविधिद्वयस्यानपेक्षिते ऽग्निहोत्रप्रकरणाम्नातावगततदङ्गभावस्य शुद्धलिङ्गमन्त्रद्वयस्य पर्युदासे व्यापाराभावे तत्प्रतिप्रसवानपेक्षणात् तेनाज्यभागक्रमाम्नातानामिव याज्यानुवाक्यानां वार्त्रघ्नीवृधन्वतीविधिभ्यां स्वाहाकारलिङ्गेनैव होमाङ्गानां शुद्धमिश्रलिङ्ग मन्त्राणां विधयः कालसम्बन्धद्वारा व्यवस्थार्था एवेति निर्देश मात्रान्न कुत्रापि व्यवस्था।

नन्वेवमपि बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीत्युपत्तिवाक्यभेदेन पृष्ठभेदात्तदपूर्वभेदाद् बृहद्रथन्तरधर्मव्यवस्थास्तु। मैवम्। पृष्ठैः स्तुवत इत्येतदेवं माहेन्द्रस्तोत्राणां चतुर्णामुत्पत्तिवाक्यं बृहद्रथन्तरवाक्यद्वयं तु माहेन्द्रस्तोत्रे गुणविधिः।

ननु पृष्ठैरित्युत्पत्तिवाक्यगतसंख्यया कर्मभेदे पृष्ठबहुत्वं नास्तीति साप्तमिकसूत्रभाष्यविरोधः स्यात्। अतो बृहद्रथन्तरवाक्यविहिते द्वे एव पृष्ठे पृष्ठैः स्तुवत इति तु मैत्रावरुणादिसाधारणं छत्रिन्यायेना-

जहल्लक्षणयानुवादः । मैवम् । यथा खल्वाज्यैः स्तुवते पञ्चदशान्या-ज्यानि पञ्चदशं होतुराज्यं सप्तदशं मैत्रावरुणस्यैकविंशं ब्राह्मणाच्छं-सिनः पञ्चदशमच्छावाकस्येत्यादिप्रयोगाद्बहिः पवमानानन्तरभावीति चत्वार्यपि स्तोत्राण्याज्यशब्दवाच्यानि । एवं पृष्ठैः स्तुवते सप्तदशानि पृष्ठान्येकविंशं होतुः पृष्ठं त्रिणवं मैत्रावरुणस्य सप्तदशं ब्राह्मणाच्छं-सिनः पञ्चदशमच्छवाकस्येत्यादिप्रयोगात्माध्यंदिनपवमानानन्तरभा-वीनि चत्वार्यपि स्तोत्राणि पृष्ठशब्दवाच्यानि । काचित्क एव रथन्तरं पृष्ठमित्यादिहोतुः पृष्ठमात्रे पृष्ठशब्दप्रयोगस्तु अर्जुने पार्थशब्दप्रयोगव-दात् । आपो वाऋत्वियमार्छन् तासां वायुः पृष्ठे व्यवर्ततेत्यादिश्रुतौ पृष्ठशब्दस्य प्रकृतिनिमित्तत्वेन विवक्षितानामपां पृष्ठाद्युत्पत्तिमव्यव-हितां वामदेव्ये तस्माच्चोत्पन्नेनव्यवहितां रथन्तरादिषु प्रदर्श्य ततः पिता वै वामदेव्यं पुत्राः पृष्ठानीति रथन्तरादिष्वेव पृष्ठशब्दप्रयोगवच्च निरूढिवशादिति कल्पनौचित्येन पृष्ठैः स्तुवत इतिश्रुतेरनुवादत्वला-क्षणिकत्वकल्पनस्य वृहद्रथन्तरवाक्ययोर्विशिष्टविधिमाहेन्द्रस्तोत्रभेद-तदपूर्वभेदगौरवायोगात् । प्रकृतौ पृष्ठबहुत्वं नास्तीति साप्तमिकव्यव-हारस्य त्वयमर्थः । विश्वजिति विधानयोग्यं चोदकप्राप्तपृष्ठबहुत्वं नास्तीति । ननु पृष्ठैक्ये साम्नोऽक्षराभिव्यक्तया दृष्टार्थत्वाद्बृहद्रथन्तर-योर्न्यायादेव विकल्पप्राप्तेर्बृहद्रथन्तरं वा पृष्ठंकार्यमिति विकल्पवचनं व्यर्थम् । अतस्तदर्थवत्वाय गौरवमप्यदोषः । मैवम् । पृष्ठैः स्तुवत इति विहितेषु स्तोत्रेषु रथन्तरबृहद्वामदेव्यनौधसकालेयानां पञ्चानां साम्नामुपदेशात्पृष्ठैः स्तुवत इत्यत्र पञ्चस्तोत्राणि विहितानीति शङ्का-निवृत्यर्थमाद्ये एव पृष्ठे वृहद्रथन्तरयोर्विकल्प इति वचनस्यार्थवत्वात् द्वादश स्तोत्राणि द्वादश शस्त्राणि तस्य नवतिशतं स्तोत्रीया इत्या-दिलिङ्गादधिकस्तोत्रसद्भावशङ्कानिराससंभवेऽप्यधिकसामाम्नानादवश्यं यत्र कचित्कल्प्ये विकल्पे बृहद्रथन्तरयोरेव नियमार्थमेतदन्यथा पृष्ठद्वयपक्षेऽप्युक्तलिङ्गादेव तत्समुच्चयनिरासंभवेन विकल्पवचनवैय-

र्थापत्तेरपरिहारात्। तस्मात्पृष्ठापूर्वभेदान्न व्यवस्था। न च स्तोभापूर्वभेदात्सा। तेषां गीतिकालपूरणेन दृष्टार्थत्वात्सामाङ्गत्वाच्च धर्मैरपि सामाङ्गभूतैर्गुणानां च परार्थत्वादिति न्यायादसंबन्धात्। ननु माभूदपूर्वभेदाद्धर्मव्यवस्था चित्रत्वशूरत्वादिस्तुतिप्रकारभेदात्तु स्यात्। न। न ह्येतावताऽपूर्वीयत्वलक्षणा सिद्ध्यति। तत्तद्धर्मविधौ तत्तत्प्रकारकस्तुतिजन्यापूर्वसाधनत्वविवक्षायां तु विशिष्टोद्देशापत्तेः। चित्रत्वशूरत्वादिप्रकारस्य कण्वरथन्तराश्विभावेन तेषु बृहद्रथन्तरधर्मानतिदेशापत्तेश्च। तस्माच्छ्रुतरूपभेदादेवात्र धर्मव्यवस्थावद्व्रीहिधर्मा अपि श्रुतरूप एव विधीयन्ते। तेनापूर्वीयत्वलक्षणया यवेष्वपीति सिद्धम्। तदेतदष्टाविंशतितमश्लोके प्रतिपादितम्।

तदेतद्दूषयामः यत्तावदुक्तं प्रोक्षणावघातविध्योर्नापूर्वनियमविधित्वं किन्तु यवपरिसंख्यार्थत्वमिति। तन्न। व्रीहिशास्त्रानर्थक्यात्। प्रोक्षणावघातविध्योर्व्रीहिपदस्यापूर्वीयत्वलक्षणया यवसाधारण्यापादनार्थमेव हि तत्।

यत्त्वस्य दूषणमुक्तं तस्याश्वशफपरिमाणपुरोडाशसमर्थाल्पव्रीहिलाभे प्रतिनिध्यनुपादानर्थत्वसंभवादिति। तन्न। नित्यानित्यसंयोगविरोधात्।

यदपि यवसाधारण्यासंभवे हेत्वन्तरमप्युक्तमपूर्वीयत्वलक्षणा न युक्ता। प्रोक्षणावघातयोः प्रकरणेनापूर्वार्थत्वात् व्रीहिद्वारा च तादर्थ्यात्तदपूर्वीयाणामेवार्थाल्लौकिकत्यागेन द्वारत्वादिति। तदपि न। विश्वजिद्यागस्य स्वर्गार्थत्वे कल्पिते श्रुतार्थापत्त्या द्वारत्वेन कल्पितस्यापूर्वस्य शाब्दत्वसिद्ध्यै अपूर्वं कृत्वेति शब्दकल्पनावत् प्रोक्षणादेरपि प्रकरणेन प्रधानापूर्वार्थत्वे कल्पिते श्रुतार्थापत्त्या द्वारत्वेन कल्पितानामपूर्वीयाणां व्रीहिणां शाब्दत्वसिद्ध्यै अपूर्वीयत्वलक्षणाया

आवश्यकत्वात्। किं च यदि व्रीहिस्वरूपमेव धर्मविधौ विवक्षितं ततो विकृतौ नीवारेषु प्रोक्षणादेरतिदेशो न स्यात्। सोयं दोषो दीक्षितैरप्यष्टाविंशतितमश्लोकविवरणान्त उक्तः। चित्रत्वशूरत्वादिप्रकारस्य कण्वरथन्तरादिष्वभावेन बृहद्रथन्तरधर्मानतिदेशापत्तेरिति ग्रन्थेन। प्रोक्षणादिष्वतिदेशश्च नवमे द्रव्यसंख्यासमुदायं वेत्यत्र व्रीहित्वविवक्षयानतिदेशं पूर्वपक्षयित्वाऽपूर्वीयत्वलक्षणया तन्निरासेन स्थापितः। अतो दीक्षितानां चित्रत्वशूरत्वविप्रकारविवक्षायामप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्निति नावमिकाधिकरणं वदतां कथमेतदधिकरणविस्मरणमिति न विद्मः। एवं तत्प्रपूर्वाधिकरणेपि प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति प्रोक्षणस्य नैवारश्चरुर्नखावपूतानामित्यत्रातिदेशोऽसिद्ध्यै अवहन्तेर्वैतुष्यद्वारा तत्साधनत्वेन वापूर्वीयत्वमुलूखलमुसलशब्दयोर्लक्ष्यमित्युक्तम्। एवं मन्त्रेष्वपि द्रव्यदेवतास्वरूपपरत्वे द्रव्यान्तरे देवतान्तरे वा विकृतावतिदेशोऽहौ न स्याताभिति।

यच्चोक्तं नचायं नियमोस्ति यदपूर्वीय एव रूपे संस्कारविधिर्न श्रुत इति तत्ते पयसीत्यत्र श्रुत्यैव लब्धसंस्कारविशिष्टपयः परामर्शिना तेनापूर्वीयत्वबोधनात् नहीयं व्याप्तिः संस्कार्योऽपूर्वलक्षणेति येन व्यभिचाराद् दुष्येत। किन्तूत्सर्गन्यायस्तस्य च न्यायान्तरेणापवादो न दोषः।

यत्तूक्तं यस्योभावाग्नी इत्यत्र विधेयाग्निद्वयोत्पादकाधानसामर्थ्यादुभयाग्न्यनुगमनिमित्तत्ववद्विधेयं प्रोक्षणादि भूतभाव्युपयोगशून्यव्रीहिषु न योग्यमिति विधेयसामर्थ्यादपूर्वीयत्वलाभ इति सत्यम्। तत्तु—श्रुतार्थापत्त्या शब्दकल्पनया इह तु तत्स्थाने लक्षणेत्युक्तम्। विधेयसामर्थ्यादपि चार्थविशेषनिर्णये शब्दकल्पकोक्ताऽर्थाद्वेत्यधिकरणे एकदेशत्वादिति सूत्रावयवेनैव।

यत्तूक्तमपूर्वीयत्वमात्रे लक्ष्ये जुह्वादिसाधारण्ये तण्डुलप्रणालिकोपेते तु विशिष्टोद्देश इति। तन्न। व्रीहिभिरिति तृतीयया तात्पर्यविषयप्रदेयप्रकृतित्वलक्षणात्। प्रदेयेन च प्रकृतित्वविशेषणमिष्टमेव। ब्राह्मणेनेव हननस्य तत्प्रतिषेधे इत्युक्तं नञ्टीकायाम् यदि व्रीहिप्रोक्षणाद्यपूर्वीयत्वलक्षणया यवेष्वपि स्यात्तदा सोमक्रयादि फलचमसेष्युपदेशत एव स्यादिति। तन्न। नित्यानित्यसंयोगविरोधात्।

यत्तु—तथात्वे प्रतिनिधेरपि मुख्यधर्मातिदेशः स्यादिति तन्न। त्वयापि धर्मविधिषु व्रीह्यादिपदे व्रीहित्वावच्छिन्नत्वहानेन व्रीहित्वावच्छेदयोग्यमात्रपरत्वस्य वक्ष्यमाणत्वात्। ततश्च यथोत्पन्नविनष्टव्रीह्यवयवा व्रीहित्वावच्छेदयोग्या एवं नीवारगता अपीति व्रीहिविधिनैव विहिता नित्या इति न तेषां धर्मान्वये नित्यानित्यसंयोगविरोधः। व्रीह्यवयवानामघातपेषणाभ्यां विनाशान्न स्वरूपेण साधनत्वं घटत इति तदवयवानामेव विजातीयपरम्परया व्रीहित्वोपलक्षितान्व्रीहिविधिर्विधत्ते। अयं च न्यायः पशोरेकहविष्ट्वमित्यत्र दशमे स्थितः। नैमित्तिके तु धर्मविधिगतसोमपदलक्षित प्रकृतापूर्वीयात्वाविशेषेपि नित्यसोमविध्यसंग्रहान्निमित्तान्वयाच्चा नित्यत्वान्नित्यानित्यसंयोगविरोध इति वैषम्यम्। तेन नित्यानित्यसंयोगविरोधोक्तेस्तदधिकरणेऽपूर्वीयत्वलक्षणाभ्युपेयेत्यपव्याख्यानमेव। एतेनैव प्रतिनिधेर्मुख्यसामानविध्ये तदभावे च नित्येन सह नैमित्तिकस्य द्विरुक्तिप्रसङ्गाप्रसङ्गावपि हेतू उपपादितौ। यत्तु—तन्न हि विधितुल्यकालं तत्संस्कारविधिर्नैयुक्तं तदङ्गीकुर्मः।

यत्तु—तदुत्तरं प्रवृत्तिनिरासायोक्तं व्रीहिविधितुल्यकालमेव प्रवृत्तियोग्यस्य संस्कारविधेर्यवसाधारण्यार्थमेव तदुत्तरप्रवृत्तिः स्यात्तच्च नित्यनैमित्तकयोरप्यविशिष्टमिति तन्न। व्रीह्यनुवादेनसंस्कारविधिर्व्रीहिविधितुल्यकालप्रवृत्तियोग्य इति व्याघाताद्यव-

साधारण्यार्थोत्तरप्रवृत्त्यभावेऽतिप्रसङ्गस्याप्ययोगादिति। तुल्यकाल-
प्रवृत्त्युक्तिस्तु ग्रन्थेषु पुनर्नैमित्तिकविधितः प्राक्त्वमात्राशया।

यत्तु—वस्तुतस्त्वित्यादिनोक्तं न मुख्यविधितः प्रतिनिधिप्राप्तिः किन्त्वनन्तरप्रवृत्तन्यायात्पूतीकेषु तु वचनादिति न युगपन्मुख्यप्रतिनिध्योर्विधिस्तच्च तुल्यं नित्यनैमित्तिकयोरपीति तदपि मुख्यविधित एव नीवारगततदवयवप्राप्तेरुपपादितत्वान्निरस्तम्। न्यायेन त्विय-दुभवति मुख्यविधितोऽश्वशफादिपरिमाणपुरोडाशजनकावयवमात्रोपादाने प्राप्ते कतिचिदवयवहानं कार्यमित्येव प्रतिनिधिगतमुख्यावयवविधिस्तु मुख्यविधित एव सिद्धः। एवं पूतीकवचनेनापि। तेन मुख्यप्रतिनिध्योर्युगपद्विधिर्नित्यनैमित्तिकयोस्तु नेति वैषम्यम्।

यत्तूक्तं व्रीहिविधौ व्रीहित्वावच्छिन्नावयवविधिरेव तत्संस्कारविधिषु तु तदवच्छेदयोग्यावयवमात्रं लक्ष्यते फलचमसे तु सोमत्वावच्छेदयोग्यत्वस्याप्यभावान्न साधारणी लक्षणा अत एव व्रीहिमंत्रः प्रतिनिधौ नोह्य इति। तदपि व्रीहिविधावेव व्रीहित्वावच्छेदयोग्यावयवविध्युपपादनात्परास्तम्। अग्रिमं त्वभ्युपगमेनेति। इयांस्तु विशेषो ममापि व्रीहित्वावच्छेदयोग्यानामेव धर्मविधिषु लक्षणा किन्त्वपूर्वीयत्वेन तेषामेव व्रीहिविधिविषयत्वात् सोमधर्मविधिष्वपि सोमपदेन सोमत्वावच्छेदयोग्यावयवानामेवापूर्वीयत्वेन लक्षणा न नैमित्तिकानामिति तुल्यव्रीहिमन्त्रानूहोपि योग्यावयवानामेवापूर्वीयत्वेन लक्षणायामपितुल्यः।

यत्तूक्तमपूर्वीयत्वलक्षणया व्रीहिधर्माणां यवसाधारण्ये वृहद्रथन्तरधर्मा अपि संकीर्येरन्निति। सत्यम्। तद्भाष्यकृन्मते स्यात्पृष्ठैक्यात्। वार्तिककृतस्तु रथन्तरं पृष्ठं भवति वृहत्पृष्ठं भवतीत्युपत्तिविधौ गुणन्यायेन कर्मभेदात्। पृष्ठैः स्तुवत इति तु गुणविध्यर्थोनुवादः। तस्योत्पत्तित्वे संख्यया कर्मभेदात् पृष्ठबहुत्वं स्यात्।

यत्तु—तत्रेष्टापत्तिः कृता यथा खल्वाज्यैः स्तुवत इत्यादिग्रन्थेन तन्न। आपो वा ऋत्विग्यमाच्छेन्नित्यर्थवादेन प्रकरणे वामदेव्ये पृष्ठशब्दप्रयोगाभावात्तद्द्वारा बृहद्रथन्तरयोः पृष्ठशब्दप्रवृत्तिनिमित्तत्वमुक्तं तच्च निमित्तं बृहद्रथन्तरसंबन्धाभावान्मैत्रावरुणसामादिस्तोत्रत्रये नास्तीति न चत्वारि पृष्ठानि किंत्वेकमेवेत्यर्थवादेन निर्णीयते। त एव तत्स्तोत्र एव कण्वरथन्तरं पृष्ठमित्यादिप्रयोगस्तेनास्यार्थवादिकस्य च रथन्तरादिष्वेव प्रयोगस्य पार्थादिशब्दवद्रूढिवशत्वोक्तिर्निर्मूला। आर्थवादिकातिरिक्तनिमित्तस्यासिद्धेः। पार्थशब्दे तु तत्सिद्धमिति वैषम्यम्। तेन प्रवृत्तिनिमित्तालाभेन कस्यचिदपि भाष्यवार्तिककृतोर्गुरोर्वाप्यसंमतं चत्वारिपृष्ठानीत्युत्पथगमनं प्रमत्तस्याश्वस्येव निषिद्धमतः पृष्ठापृष्ठसमुदाये एवायं पृष्ठशब्दोऽनुवाद इति निर्णीते अगत्या विशिष्टविधिस्तद्बलात्कर्मभेदापूर्वभेदगौरवमर्थदोषः। तयोरेव पृष्ठयोरदृष्टार्थत्वात् समुच्चयप्रसक्तौ वचनाद्विकल्पो रथन्तरं बृहद्वेति।

यत्तूक्तम् पृष्ठद्वयपक्षेऽपि द्वादशस्तोत्राणि द्वादशशस्त्राणि तस्य नवत्रिशतं स्तोत्रीया इत्यादिलिङ्गादेव तत्समुच्चयनिराससंभवाद्विकल्पवचनवैयर्थ्यापत्तिरिति। तन्न—एवं हि व्रीहिसोमादिविधेरपि तदापत्तिरपरिहार्या। तत्संस्कारविधिषु तदनुवादरूपाल्लिङ्गादेव तत्प्राप्तिसंभवात्। तथा विकृतौ प्रयाजे कृष्णलं जुहोत्यनुवादलिङ्गादेव प्रयाजादिप्राप्तिसंभवे तदतिदेशानर्थक्यं स्यात्। अन्यथा च तवाप्येकलिङ्गेन सिद्धौ लिङ्गान्तरवैयर्थ्यं दुष्परिहरमेव। तस्मादेवं जातीयेष्वीदृक्परिहारः द्वादशस्तोत्राणीत्यादेरपि तावदनुपपत्त्या प्रतीयमानविकल्पविधायिता कल्प्या तद्वरं वाशब्दवतो रथन्तरं वेत्यस्यैवेति सर्वमनवद्यम्।

अथ 'मन्त्रेणाश्वस्य रज्जोर्ग्रहणम्' इत्येकोनत्रिंशत्तम श्लोकदूषणम्।

"मन्त्रेणाश्वस्य रज्जोर्ग्रहणमि"त्याद्येकोनत्रिंशत्तमे तु श्लोके इद

मुक्तं वार्तिके इमामगृभ्णन्नित्यादावप्राप्तपरिसंख्यायां तु त्रैदोष्यनियम इति । तदुक्तम्—

यद्यस्य विनियुक्तस्य प्रत्यक्षा स्यात्पुनः श्रुतिः ।
ततश्च परिसंख्यानात्प्रसज्येत त्रिदोषता ॥
यदि तु प्रतिषिद्धत्वात्सामान्यविनियोगकृत् ।
नैवास्ति श्रुतिरत्रेति न प्राप्नोति त्रिदोषतेति ॥

तत्रेदमाक्षिप्यते अश्वरशनायां मन्त्रस्य विनियोगेन निराकांक्षत्वेपि गर्दभरशनाया मन्त्राकांक्षया तत्रापि मन्त्रविनियोजकसामान्यशास्त्रस्यावश्यकल्प्यत्वात् । इष्टश्चाग्न आयाहि वीतये इत्याद्यानां ज्योतिष्टोमप्रकरणाम्नातानामाग्नेयीनामृचां विशेषतः स्तोत्रादौ विनियोगेन निराकाङ्क्षाणामप्याग्नेय्याग्नीध्रमुपतिष्ठत इति विहितस्याग्नीध्रोपस्थानस्याग्नेय्याकांक्षया तत्सम्बन्धः । तथा प्रकरणाद्युपदेशतः प्रकृत्यन्वयेन निराकांक्षाणामपि प्रयाजादिनां विकृतिभावनया तत्कथंभावाकांक्षावलादतिदेशं कल्पयित्वाप्यन्वय इष्ट एव । एवमिहापीमामगृभ्णन्निति मन्त्रस्यापूर्वाभिधान्यां विनियोगेन निराकांक्षस्यागर्दभरशनादानेन तत्प्रकाशकाकांक्षया सामान्यवचनं कल्पयित्वाप्यन्वयः किं न स्यात् । एवमवश्यकल्पिते सामान्यवचने प्राप्तपरिसंख्यैव संपन्नेत्यापीति त्रिदोषत्वं षोडश्युत्तर इतिवत् दुष्परिहरमेव । किं च प्राप्तपरिसंख्यायां त्रिदोषत्वं क्वचिदुक्तोदाहरणादावस्तु सर्वत्र प्राप्तपरिसंख्यायां त्रिदोषत्वं प्रसज्यत एवेति नियमस्तु मीमांसकप्रसिद्धो न युक्तः । यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्यदुपभृति प्रयाजानुयाजेभ्यस्तदित्यविशेषप्रवृत्तेन प्रत्यक्षशास्त्रेण सर्वेषां प्रयाजानां जौहवौपभृताज्यकार्यत्वप्राप्तावतिहायेडो बर्हिः प्रतिसमानयतीत्याद्यौपभृताज्यसमानयनकालविध्यर्थलभ्यायां जौहवौपभृताज्यानामुपरितनप्रयाजद्वयप्राचीनप्रयाजत्रयपरिसंख्यायां

प्रायणीयातिथ्ययोश्च चोदकात्मकत्वाङ्गप्राप्तौ शंय्वन्ता प्रायणीया संतिष्ठते इडान्तातिथ्येति शंय्विडान्तोपरमविध्यर्थलभ्यशंय्विडान्तोक्तराङ्गपरिसंख्यायामप्यन्यस्यामप्येवंविधायामर्थान्तरविध्यर्थलभ्यायां परिसंख्यायां त्रैदोष्याभावादिति ।

तदेतदपि मन्दप्रज्ञस्य वैजात्यमात्रम् । तथाहि—यत्तावदुक्तं प्रत्यक्षेणाश्वाभिधान्यादाने विनियोगेन निराकाङ्क्षेपि मन्त्रे शेष्यन्तर गर्दभरशनादानप्रकाशकाकाङ्क्षावशात्तत्र मन्त्रविनियोजिका श्रुतिर्लिङ्गेन कल्प्यत इति । तन्न । एवं हि वदन्नूनं श्रुतिलिङ्गादिप्रभृतिकृत्स्नं मीमांसातन्त्रं संप्रदायेनानधीतवान्विस्मृतवान्वेति । ऐन्द्री हि ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति गार्हपत्योपस्थाने विनियोगे निराकाङ्क्षापीन्द्रोपस्थानेपि तस्य प्रकाशकाकाङ्क्षावशाल्लिङ्गेन विधिं कल्पयित्वा विनियुज्येत । एवं सर्वत्र । अथ तत्र मन्त्राकाङ्क्षासहकृतं लिङ्गं मन्त्रविनियोजकश्रुतिकल्पनहेतुरिति प्रत्यक्षविनियोगेन मन्त्राकाङ्क्षा निवर्त्तते कल्पनामूलोच्छेदलक्षणो बाधो भवतीति प्रमेयापहारलक्षणबाधवैषम्याय विरोधाधिकरणे शास्त्रदीपकोक्तः प्रकारः कृत्स्नं तन्त्ररक्षामन्त्रोनुसंधीयेतोक्तदोषोद्धाराय ततो रशनामन्त्रेऽपि प्रत्यक्षविनियोगेनाकाङ्क्षानिवर्त्तनात्तदसहकृतलिङ्गेन श्रुत्यकल्पनायास एवानुसंधेयः । एवमुभयसमाधेये कृत्स्नेपि श्रुतिलिङ्गादिना बाधव्याप्तेः तन्त्रे सति भवदुक्तदृष्टान्तद्वयवैषम्यमात्रं वाच्यम् । तदुच्यते । नात्राग्नेयीन्यायस्तत्र हि क्लृप्त एवाग्नेय्या अग्नीध्रमुपतिष्ठत इति विधिः स स्तोत्रादौ विनियोगतो निराकाङ्क्षामपि प्रकृतामाग्नेयीं क्लृप्तापूर्वान्वयलाघवेन गृह्णातीति न्यायः स रशनामन्त्रे नास्ति । नह्यत्रानेन मन्त्रेण रशनां गृह्णीयादिति सामान्यतो गर्दभरशनां गृह्णीयादिति विशेषतो वा विधिः क्लृप्तोस्ति यो लाघवेन प्रकृतं क्लृप्तापूर्वान्वयमिमामगृभ्णन्नित्यश्वाभिधानीग्रहणे विनियोगतो निराकाङ्क्षमपि मन्त्रे गृह्णीयात् । कल्प्यस्य तु कल्पना-

प्रतिबन्ध एव नैराकाङ्क्ष्याद्भवतीत्युक्तम्। नाप्यत्र प्रकृताङ्गातिदेश-न्यायः। दृष्टार्थत्वाद्दृष्टार्थत्वाभ्यां वैषम्यात्। लोकतोऽनिर्ज्ञातोत्पत्ति-प्रकारं हि विकृत्यपूर्वमन्यतोपि न कथंचिन्निराकाङ्क्षं भवति। तस्य तदाकाङ्क्षावलान्निराकाङ्क्षाणामपि प्राकृतानां धर्माणां चोदनालिङ्गेनोपस्थितानामतिदेशकल्पनं युक्तम्। गर्दभरशनादानकार्यं तु दृष्टत्वाल्लोकत एव निर्ज्ञातोत्पत्तिप्रकारमन्यतोपि ध्यानादेर्निरा-काङ्क्षं भवति। न तस्य तदाकाङ्क्षावलान्निराकाङ्क्षस्येमामगृभ्णन्नि-तिमन्त्रस्य लिङ्गाद् गर्दभरशनादानेपि प्रापकं वचनं कल्प्यत इति दृष्टा-न्तद्वयवैषम्यम्। तेन त्रैदोष्यपरिहारो वार्तिककृदुक्तो दुर्बोधत्वेन भ्रान्त्यैव दूषयितुं व्यवसितः।

यत्तु—सर्वस्यां प्राप्तपरिसंख्यायां त्रैदोष्यमिति मीमांसकसि-द्धान्तो न युक्त इत्युक्त्वोदाहरणद्वयमुक्तम्। तत्राद्यं तावदयुक्तम्। यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति प्रयाजानुयाजेभ्यस्तदिति सामान्यशास्त्रयोरतिहायेड इत्यौपभृताज्यसमानकालविधितोऽर्थलभ्य उपसंहार एव न तु परिसंख्या। अन्यथाऽऽग्नेयं चतुर्धा करो-तीत्यस्यापि परिसंख्यात्वापत्तेरुपसंहारो दत्तनिलाञ्जलिरेव स्यात्। न चोपसंहारः परिसंख्यैव, गृहमेधीयाधिकरणे भाष्यकारा-दिसर्वसंमता अष्टौ पक्षविकल्पा नोपपद्येरन्। पञ्चमस्य परिसंख्या-त्वात्सप्तमस्योपसंहारात्मकस्य परिसंख्यान्तर्गतेः। किं वा भावादतिरात्रेषु गृह्यत इत्यत्राधिकरणे "ननूपसंहारः परिसंख्या वा षोडश्युत्तर" इनीति भाष्यं तदनुपपन्नं स्यात्परिसंख्योपसंहार-योरभेदे तस्मादतिहायेड इत्यनेनार्थलभ्य उपसंहार एव जौह-वौपभृताज्ययोः प्राचीनप्रयाजत्रये तदुत्तरप्रयाजद्वये चेति। नन्वेवं सर्वत्रसामान्यविधौ विशेषविधिरुपसंहार एव स्यादिति न क्वापि प्राप्तपरिसंख्या स्यात्। उच्यते सर्वप्रदानाधिकरणे वार्तिक-कृता "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। स्पष्टस्य तु विधेर्ना-

न्यैरुपसंहारसंभव" इति पूर्वोत्तरार्धाभ्यामस्य स्पष्टास्पष्टविध्योरुपसंहारसंभवासंभवावुक्तौ। तेन यत्रैव स्पष्टविधित्वादुपसंहारासंभवः स एव प्राप्तपरिसंख्याया विषयः। तद्यथावयविनोऽवयवेषु व्यासज्यवृत्तेः सामान्यरूपत्वाभावादवयविविधिः स्पष्टोऽवयवविशेषविधिभिर्नोपसंह्रियत इति यागहोमयोरैक्यं भाष्यकारसंमतमभ्युपेत्यापि चतुरवत्तं जुहोतीत्यनेनाग्नेयविधेरनुपसंहार इत्युत्तरार्द्धविषय उक्तः। एवं दशमे पशोरेकादशविष्टं समस्तचोदितत्वादित्यत्र हृदयस्याग्रेऽवद्यतीत्येकादशावदानगणचोदनया पश्ववयविविधिर्नोपसंह्रियत इति प्राप्तपरिसंख्याया असौ विषयः।

यत्त्वर्थलभ्यप्राप्तपरिसंख्यायामुदाहरणान्तरमुक्तं शंय्वन्ता प्रायणीया संतिष्ठत इडान्तातिथ्येति तत्राप्यतिदेशस्य सामान्यविधित्वेनास्पष्टत्वादुपसंहारस्यैव न्याय्यत्वाच्छंय्विडान्तोपरमाख्यसंस्थाविध्यर्थलभ्योपसंहारस्यैव तदुदाहरणं न प्राप्तपरिसंख्यायाः एवमर्थान्तरविध्यर्थलभ्यः सर्व उपसंहार एव न परिसंख्या कामविधीनां सामान्यतः प्रवृत्तानां त्रैवर्णिकविषयैराधानोपनयनविधिभिरर्थलभ्यस्त्रैवर्णिकविषयत्वेनोपसंहार एव क्रियते न तत्रार्थलभ्या परिसंख्येति। अस्तु वैवंविधे सर्वत्रार्थान्तरविध्यर्थलभ्यान्यव्यावृत्तिर्नतु सा प्राप्तपरिसंख्येति व्यवह्रियते। श्रुतविधीनामेवापूर्वनियमपरिसंख्याविधिव्यपदेशात्। न हि परम्परया वर्जनबुद्धिफलको विधिः परिसंख्याविधिर्नियमविधेरपि तथात्वापत्तेः। ततश्च यथावघाताद्विधौ परम्परयोपायान्तरपरिसंख्याफलत्वेपि साक्षान्नियममात्रं फलमिति नियमविधित्वेनैव व्यपदेशः। एवं शंय्विडान्तसंस्थाविध्यादिष्वपि साक्षादप्राप्तशंय्विडान्तसंस्थादिप्रापकत्वमेवेत्यपूर्वविधित्वादिनैव व्यपदेशो युक्तः। न चैतद्विध्यनुपपत्त्या विध्यन्तरं कल्प्यते यस्य प्राप्तपरिसंख्यात्वव्यपदेशः स्यात् किंतु औहवौपभृताज्यविनियोजकविधिगतोद्देश्यसमर्पकप्रयाजपदे तद्विशेषलक्षणैव लभ्यते।

अतः सर्वत्राप्राप्तपरिसंख्यायां त्रैदोष्याभावोक्तिर्वार्तिकारीया प्राप्तपरिसंख्यायां च सर्वत्र त्रैदोष्यनियमोक्तिः सुस्थैवेत्यलमनवगताचार्योक्तितात्पर्यस्य सिद्धान्तदूषणग्रहगृहीतस्य प्रलापनिरासव्यसनेनेति ।

अथ "अत्राप्याक्षेपवर्गे" इतित्रिंशत्तमश्लोकदूषणम् ।

त्रिंशत्तमे तु श्लोके—"अत्राप्याक्षेपवर्ग" इत्यादौ पूर्वोक्तानामप्याक्षेपहेतूनां मध्ये केषांचिदाक्षेपार्थं प्रकरणान्तरारम्भप्रतिज्ञामात्रं कृतमिति न तत्र किंचिद्वक्तव्यमस्तीति ।

अथ "पश्वाद्यर्थो हि" इत्येकत्रिंशत्तमश्लोकदूषणम् ।

तत्र तावदपूर्वविधिलक्षणे वैकृताग्निविध्यव्याप्तिरूपस्याक्षेपस्याद्यश्लोकोक्तस्याक्षेपार्थः । "पश्वाद्यर्थो हि नैव प्रकृतिषु विकृतिष्वध्वरेष्वग्निरङ्गम्" इत्यादिरेकत्रिंशत्तमः श्लोकः तस्यार्थः । दशमेऽन्यतिग्राह्याधिकरणेऽतिदेशतः संभवत्प्राप्तिका अग्निविधयः फलार्थश्येनाकृत्यादिगुणप्राप्त्यर्था इत्युक्तम् । तदयुक्तम् । पशुकामश्चिन्वीतेत्यादिवाक्यैरग्नेः फलार्थत्वेनातिदेशतो विकृतिषु प्राप्त्यसंभवात् । न चाग्निष्टोमवाक्यात्क्रत्वर्थत्वेऽप्यतिदेशः सम्भाव्येतेति वाच्यम् । दध्यादिवत्सिद्धरूपस्यानारभ्याधीतस्य वाग्नेरपेक्षिताश्रयक्रियासमर्पकतयाऽग्निष्टोमवाक्यानामनपेक्षितक्रत्वङ्गत्वपरत्वायोगात् । नन्वग्नेः प्रकरणापाठेपि दीक्षणीयाद्विसोमप्रयोगसंकीर्णसावित्रहोमोखासंभरणदीक्षणीयावैशेषिकगुणरुक्मप्रतिमोचनाद्यङ्गकलापवत्त्वरूपाल्लिङ्गादाश्रयलाभादग्निष्टोमादिवाक्यानि क्रत्वङ्गत्वपराण्येव । न प्राकरणिकोत्तरवेद्यवरोधात् साप्तदश्यवद्विकृतावेव गच्छतोऽग्नेरग्निष्टोमोक्थ्यातिरात्रवाक्यानि तावत्प्रकृत्याश्रयत्वपराण्येव । एवं च शीघ्रप्रवृत्तवचनोक्तप्रकृत्याश्रयेण नैराकाङ्क्ष्ये दीक्षणीया-

सम्बन्धलिङ्गाद्विकृत्याश्रयत्वकल्पना न युक्ता आश्रयप्रापकतद्विधिप्रायपाठाच्च द्विरात्रादिवाक्यान्यश्रयत्वपराण्येव नाङ्गत्वपराणीति। तदिदं मीमांसकसिद्धान्तानभिज्ञस्य प्रलपितं पशुकामश्चिन्वीतेति हि क्रियैव फलसाधनं न गुण इत्याश्रयापेक्षाभावादङ्गत्वस्यैवाग्निष्टोमादिवाक्यार्थत्वादिति ।

अथ "नित्यात्काम्यस्य" इति "अग्निष्टोमादयः" इति द्वात्रिंशत्तमत्रयस्त्रिंशत्तम श्लोकदूषणम्।

कैश्चित्तु–पूर्वोक्तरीत्यैकत्रिंशत्तमश्लोकं व्याख्याय प्रकारान्तरेण तदपि दूषितम्। लिङ्गादेवाग्नेः प्रकृत्याश्रयत्वसिद्धेः काम्ये नित्यस्य बाधकमिति न्यायेन तस्योत्तरवेदिबाधकत्वात्। किंच काम्येनाग्निनोत्तरवेदेर्न बाधः। उत्तरवेद्यां ह्यग्निश्चीयत इति श्रुतिबलादग्निनिधाने वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयतीति श्रुतयोर्वेदिबर्हिषोर्हविरासादन इव समुच्चयात्। तस्मात्काम्यस्याग्नेर्लिङ्गात्प्रकृत्याश्रयत्वसिद्धेरग्निष्टोमादिवाक्यानि क्रत्वङ्गत्वपराण्येव।

ननु काम्येऽग्नौ पर्णतावत्प्रकृतौ वाऽद्भिरुक्तत्वादिति न्यायायोगात्समुच्चित्य प्रकृतिविकृतिसर्वसोमाश्रयत्वे प्राप्ते परिसंख्यार्थान्यग्निष्टोमादिवाक्यानि स्युः। न। तेषां लाघवेन प्राप्तापोदितक्रत्वङ्गत्वप्रतिप्रसवार्थत्वात्। उत्पत्तौ स्वग्निं चिनुत इत्यग्नेः संस्कार्यत्वोक्तेश्चयनप्रकरणे च तन्निवृत्त्या स्थण्डिलोपर्याहवनीयस्थापनोक्तेः। क्रत्वव्यभिचारिसंस्कार्यद्वारा क्रत्वङ्गत्वं प्राप्तं तथा सोमप्रयोगसङ्कारणस्य चयनस्य सोमप्रयोगमध्ये एवानुष्ठातव्यत्वादनुष्ठानसादेश्यलक्षणक्रमादपि क्रत्वङ्गत्वं प्राप्तं कामवाक्येनापोदितं पुनः प्रतिप्रसूयतेऽग्निष्टोमादिवाक्यैरित्याशङ्क्य द्वात्रिंशत्तमः श्लोकः कृतो"नित्यात्काम्यस्य" इत्यादिः। तदयुक्तम्। न तु काम्येऽग्नौ पर्णतावदित्यादिनोक्तस्य परिसंख्यार्थस्यैव न्याय्यत्वात्।

यत्तु—तेषां लाघवेनेत्यादिक्रत्वङ्गत्वप्रतिप्रसवार्थत्वमुक्तम्।

तदप्ययुक्तम्। अग्नेश्चयनस्य काम्यत्वेऽनित्यमिति द्वितीयायाः सक्तुवद्ङ्गत्वाद्वाद्यर्थाभावे काम्यचयनानुनिष्पादिनि स्थले आहवनीयस्थापनविधावपि परप्रयुक्तोपजीव्याहवनीयस्थापनं प्रति चयनस्याङ्गत्वं नाक्षिप्यते। एकहायिन्यास्तच्चयनस्येव पदकर्म प्रतीवेति नाङ्गत्वं प्राप्तम् अत एवानुष्ठानसादेश्यादपि कामवाक्यबाधितात्तन्न प्राप्तं यत्कामवाक्येनापोद्येत पुनश्चाग्निष्टोमादिवाक्यैः प्रतिप्रसूयेत। अतोऽगत्या प्रतिप्रसवासंभवादेकवित्याद्यनुवसनक्रियान्तरस्यापि नमः प्रवक्त्रे इति निगदानन्तर्यबलात् क्रतुमध्ये प्रयोगवदिह लिङ्गात्सर्वसोमयागान्तर्गतिप्रसक्तौ परिसंख्यार्थान्यग्निष्टोमादिवाक्यानि तेन प्रकृतावग्नेरनङ्गत्वादतिदेशेनासंभवत्प्राप्तिकस्याप्युपदेशत एव लिङ्गसनाथात्प्राप्तस्य काम्यस्याग्नेर्वैकृताग्निविधयः परिसंख्या एवेति शक्यमुच्छृङ्खलं वक्तुं सर्वसिद्धान्तानुपपादयितुमशक्तया विस्मयवन्तं दीक्षितं प्रति। तस्मान्दुन्मर्यादोक्तौ तेषामपूर्वविधित्वे चाव्याप्तिरपूर्वविधिलक्षणस्येत्युक्तिर्दीक्षितीया साहसमात्रम्।

वस्तुतस्तु—द्विरात्रादिवाक्यानां त्रयस्त्रिंशत्तमश्लोकवक्ष्यमाणरीत्या गुणकामप्रवृत्तिप्रयोजनतयाऽपूर्वविधित्वाल्लक्षणस्य तेष्वव्याप्तिः सुस्थैवेति वक्ष्यामः। इह त्वङ्गत्वप्रतिप्रसवदुर्दूषयिषया परिसंख्याभ्युपेतेत्युपरम्यते।

यस्तु—"नित्यात् काम्यस्येति" द्वात्रिंशत्तमः श्लोकस्तस्यार्थः। अग्निष्टोमादिवाक्यानां क्रत्वङ्गत्वपरत्वेपि न क्वाप्यतिव्याप्तिः। न तावदग्निष्टोमवाक्ये। तस्याप्राप्तप्रापकत्वात्। न च तस्यैव विकृत्यग्निष्टोमेपि प्रापकत्वात्तदंशेऽतिदेशप्राप्तिसम्भवादव्याप्तिः। तस्यैकत्वेन तदप्रवृत्तौ प्रकृतावनङ्गत्वाद्विकृतावतिदेशायोगात्। नापि तमुक्थेन तमतिरात्रेणेति विध्योरव्याप्तिस्तयोरप्यग्निष्टोमवाक्यवत्प्रकृतिविकृतिरेवेति न तत्रातिदेशतः प्राप्तिर्नाप्यग्निष्टोमवाक्यरूपादुपदेशात्तत्संस्थत्वाभावात्। तयोरेव विकृत्यंशेपि नाव्याप्तिरग्निष्टोमवाक्य-

वदेव। नापि द्विरात्रादिवाक्येष्वव्याप्तिः। द्विरात्रादिष्वग्निष्टोमो-क्थातिरात्रिसंस्थानामङ्गानां सत्वात्तेषु तावत्तद्विधिभिरेवोपदिष्टो-ग्निस्तेषु चाग्निसिद्धौ तदाश्रितगुणकामप्रवृत्तिर्द्विरात्रादौ सिद्धेति तदीयषोडशिसंस्थेषूपदेशोपि व्यर्थ इति न तदर्थमपि द्विरात्रादिवाक्यं तेन द्विरात्राद्यन्येभ्यः परिसंख्यार्थं तत्। षोडशिग्रहविषयद्विरात्रादि-वाक्यमिवाहरन्तरेभ्यः। तदुक्तं षोडशिनो वैकृतत्वमित्याधिकरणे आम्नातं परिसंख्यार्थमिति सूत्रेण।

वस्तुतस्तु—षोडशिग्रहवाक्ये अग्निष्टोमादिशब्दानां प्रकरणेन प्रकृतिमात्रपरत्वाद् द्विरात्रादिष्वतिदेशः कल्प्य इत्यप्राप्तपरिसंख्या। अग्निवाक्येषु त्वनारभ्याधीनत्वेन तेषां प्रकृतिविकृतिपरत्वा-दुपदेशत एव द्विरात्रादेरहरन्तरेष्वपि प्राप्तिरिति प्राप्तपरिसंख्येति त्रैदोष्याद्द्विरात्रादिवाक्यान्यग्निष्टोमादिविधीनामर्थवादाः यथाङ्गिरसां द्विरात्रे षोडश्युत्तर इतिवाक्यमुत्तरेहन्द्विरात्रस्य गृह्यते इति सामा-न्योपदेशात्प्राप्तपरिसंख्याऽहरन्तरेभ्य इति वृत्तिकारमते त्रैदोष्याद-परितुष्य भाष्यकृद्वैश्वानरविधेरर्थवाद इत्याहेति। अत्र षोडशिविषय-वाक्येष्विवाग्निविनियोजकवाक्येष्वप्यग्निष्टोमादिशब्दाः प्रकृत्यग्नि-ष्टोममात्रपरा न विकृत्यग्निष्टोमपरा अपीति द्विरात्राग्निष्टोमा-द्यातिदेशात्संभवत्प्राप्तिकस्याग्नेर्द्विरात्रादावप्युद्देशस्तत्राव्याप्तिरित्या-क्षिप्य षोडशिवाक्येषु प्रकरणबलात्प्रकृत्यग्निष्टोमादिश्रुतिसंकोचो युक्तो न त्वग्निविनियोजकवाक्येष्वनारभ्याधीतेषु तथा युक्तमित्य-र्थवादत्वसमर्थनमेव त्रयस्त्रिंशतमे श्लोके "अग्निष्टोमादयश्चेत्प्रकृतय-इह" इत्यादिनोक्तम्। तदिदमपि साहसमात्रम्। अर्थवादत्वं हि प्राप्ता-र्थकत्वे स्यात्तन्न षोडश्युत्तर इत्यत्रास्ति उत्तरे ऽहन्द्विरात्रस्य गृह्यत-इत्यनेनैव सिद्धेः तद्द्विरात्रेणेत्यादिषु तु त्रयस्त्रिंशत्तमश्लोकोक्तस्य-गुणकामप्रवृत्तिप्रयोजनकत्वस्य तदुत्तरश्लोककृतदूषणनिरासेन स्थि-रीकरिष्यमाणत्वान्नार्थवादत्वं युक्तम्। किञ्च व्यनीकायां त्वित्य-

धिकरणे प्रयोजनान्तरेणार्थवति विधौ सम्भवति सम्भवदन्यर्थवादत्वं नाङ्गीकार्यमित्युक्तम् तद्वदत्रापीति ।

अथ "अग्निष्टोमादिशब्दाः" इतिचतुस्त्रिंशत्तमश्लोकदूषणम् ।

यत्तु "अग्निष्टोमादिशब्दाः प्रकृतिविकृतिसंस्पर्शिनः संतु नाम" इत्यादिनास्य दूषणं कृतं तस्यार्थः। प्रकृतिविकृत्यग्निष्टोमादिपरत्वेऽग्निष्टोमादिशब्दानां यत्र विकृतिष्वग्निष्टोमादिसंस्था उपदिष्टास्तासामेव विकृतीनां संग्रहात्सामानविध्यं न तु यत्रातिदिष्टा अग्निष्टोमादिसंस्थास्तासामप्यग्नयश्च स्वकालत्वादित्यधिकरणे आहवनीयस्योपदिष्टहोमास्वेव विकृतिषूपदेशो नत्वतिदिष्टहोमास्विति वार्तिकोक्तन्यायात् । तस्माद्द्वादशाहान्तर्गतदश-रात्रातिदिष्टाग्निष्टोमादि संस्थाकानि यानि द्विरात्रादिष्वहानि तेषु गुणकामप्रवृत्त्यैः द्विरात्रादिवाक्यैः सामानविध्यमिति । इदं त्वस्मदिष्टमेव ।

अथ "तत्रैतद् दूषणं स्यात्" इतिपञ्चत्रिंशत्तमश्लोकदूषणम् ।

यत्तु "तत्रैतद् दूषणं स्यात्" इत्यादिना पञ्चत्रिंशत्तमश्लोकेन दूषितं तस्यार्थः । स्यादेवं यद्यग्न्याश्रितगुणफलविधिषु क्रत्वपूर्वान्वयित्वेन सिद्धोऽग्निराश्रयत्वेनानुवाद्यः स्यान्न त्वेवमनारभ्यवादत्वादग्निष्टोमादिवाक्यैः क्रत्वन्वयकरणात्प्रागेव य एव विद्वानग्निं चिनुत इत्युत्पन्नः शुद्धोऽग्निः श्येनाकृत्यादिगुणफलविधिष्वाश्रयत्वेनान्वेति। ततो लिङ्गादग्निष्टोमादिवाक्यैश्च विनियोगाद्यत्राग्निस्तत्रैव तदाश्रितगुणफलविधय इत्यर्थादेव तेषामपूर्वीयाग्निसम्बन्धः अर्थात्सिद्ध्यति चापूर्वीयस्याश्रयत्वं येष्वग्निरौपदेशिको येषु चातिदेशिकस्तेषु सिद्ध्यति एतादृशविषयाभिप्रायेणैवाह भाष्यकृत्—तस्मिन्प्रवर्त्तमाने कामोपि प्रवर्त्तत इति। तस्मादतिदिष्टाग्न्याश्रयणेनापि गुणकामप्रवृत्तिसंभवान्न तदर्थानि द्विरात्रादिवाक्यानीति । सोयं दूषणरभसवशायातमनोविक्षेपजः प्रलापः। पूर्वश्लोके ह्यग्निष्टोमादिसंस्थानां यत्रोपदेशस्तत्रैव

गुणकामप्रवृत्तिर्न यत्रातिदेशस्तत्रापीति तदर्था द्विरात्रादिविधय इत्युक्तम्। इह तु यत्रौपदेशिका अग्नयो यत्र वातिदेशिकास्तत्रोभयत्रापि गुणकामप्रवृत्तेर्न तदर्थाद्विरात्रादिविधय इत्युच्यते इति किं केन संगतम्। नह्युत्तरेण पूर्वं दूष्यते। आतिदेशिकाग्निमन्त्यपि विकृतिभूतानि यानि द्वादशाहीयदशरात्रादतिदिष्टामादिसंस्थाकानि द्विरात्रादिपृष्ठानि तेष्वग्निष्टोमाग्निष्टोविवाक्याप्रवृत्तेरसिद्धा गुणकामप्रवृत्तिर्द्विरात्रादिवाक्यानांप्रयोजनमिति। तस्मादसम्बद्धोदाहरणानीतीष्टमेवेदम्।

अथ 'वाचस्त्वग्नेः' इति षट्त्रिंशत्तमश्लोकदूषणम्।

'वाचस्त्वग्नेर्द्विरात्रप्रभृतिष्वि'ति षट्त्रिंशत्तमश्लोके पञ्चषाणि द्विरात्रादिवाक्यप्रयोजनान्युक्तानि। तस्यार्थः। अर्थवादत्वंवा यदि त्वग्निष्टोमोक्थातिरात्रवाक्यसारूप्यात्तेषामवश्यं केन चित्प्रकारेण विधित्वं वाच्यमिति निर्बन्धात्तत्रापरितोषस्तदा तान्यहर्गणान्तरेष्वग्नेः परिसंख्यां कुर्वन्तु। यदि तु प्राप्तपरिसंख्या त्रिदोषेति तत्रापरितोषस्तोऽतिदिष्टाङ्गान्तरपरिसंख्यां कुर्वन्तु। यदि तु द्विरादिष्वतिदिष्टाङ्गान्तरसद्भावे लिङ्गत्वात्तद्विरोधात्तत्राप्यपरितोषस्तर्हि द्विरात्रादिषूत्तरवेद्याः पक्षे प्राप्तावग्नेर्नियमनं कुर्वन्तु। यद्वा द्विरात्रादिचोदकपर्यालोचन लभ्योत्तरवेदिप्राप्त्यपेक्षाग्निनियमापेक्षयाऽग्निप्रकरणाम्नातसन्निहितगुणकामप्रवृत्तिप्रयोजनतैवास्तु। अथ वेहान्यतः सम्भवन्तो गुणकामप्राप्तिः फलं न भवतीत्युक्तेर्व्यवहितापेक्षोपि नियमः फलमस्तु तदुक्तमाद्यश्लोके षोडशद्विरात्रवाक्ये सन्निहितफलाभावात्प्रकरणान्तरस्य चोदकापेक्षो नियमः फलमिति। यद्वा नियमनं गुणकामप्रवृत्तिश्चोभयमपि प्रयोजनमस्तु। न ह्येकस्य विधेरेकमेव प्रयोजनमिति नियमोऽस्ति। उत्तरेऽहन्द्विरात्रस्य गृह्यत इत्यादिषु तत्प्राचीनवाक्योक्तब्राह्मणराजन्यनिमित्ताभावेपि षोडशिनः प्राप्त्यर्थानीत्युक्तं—शास्त्रदीपिकायाम्। तन्त्ररत्ने तु—प्रकृत्यति-

रात्रे विकल्पितस्य षोडशिनस्तथैव द्विरात्रस्योत्तरेऽहन्यतिरात्र-संस्थाके चोदकात्प्राप्तौ तन्नियमार्थमिति । सूत्रकृता तु षोडशिनो-वैकृतत्वमित्यधिकरणे आम्नानं परिसंख्यार्थमिति सूत्रेणातिरात्रो-क्थ्याग्निष्टोमसंस्थाकेष्वहर्गणानामहरन्तरेष्वपि ब्राह्मणराजन्ययोः षोडशिनः प्राप्तौ तत्परिसंख्यार्थानीत्युक्तम् । तदपीदमेषु पक्षेष्वन्य-तरनिर्धारणासामर्थ्यमेवाविष्करोति । सर्वेषु हि पक्षेषु त्वयैवापरि-तोष उक्तः । प्रकरणसन्निहितगुणकामप्रवृत्तिस्तु प्रयोजनं निर्दोषम् ।

यत्तूक्तमन्यतः संभवन्ती गुणकामप्रवृत्तिः फलं न भवतीत्युक्ते-र्व्यवहितापेक्षोपि नियमः फलमित्युक्तम् । तदयुक्तम् । अन्यतः संभवन्ती गुणकामप्रवृत्तिः फलं न भवतीत्युक्तिर्हि द्वात्रिंशत्तमत्रय-स्त्रिंशत्तमश्लोकयोः कृता सा चतुस्त्रिंशत्तमश्लोकेन दूषिता । ततस्त-स्यापि दूषणं पञ्चत्रिंशत्तमश्लोकेन यत्कृतं तन्निरस्यद्भिरस्माभिर्गुण-कामप्रवृत्तिरेव प्रयोजनं स्थिरीकृतमिति न पक्षान्तरावकाशः ।

'अथ उक्थ्यादिस्पृक्' इति सप्तत्रिंशत्तमश्लोकदूषणम् ।

यत्तु—सप्तत्रिंशत्तमश्लोके एकदेशिमतं दूषितं तन्नैव वार्तिक-कारादीनां संमतमिति वृथा तद्दूषणम् ।

अथ 'तासु स्यात्' इत्यष्टात्रिंशत्तमश्लोकदूषणम् ।

यदुक्तं साप्तदश्यवाक्यवदभ्युदयार्थत्वाङ्गीकारेण स्वर्गकामा-दिवाक्येष्वपूर्वविधिलक्षणाव्याप्त्युद्धारे तस्य नियमपरिसंख्याविध्योरतिव्याप्तिः स्यादिति । तत्र साप्तदश्यवाक्यदृष्टान्तकथनमयुक्त-मित्याक्षेपार्थं 'तासु स्यादि'त्यादिरष्टात्रिंशत्तमः श्लोकः । तस्यार्थः । अनारभ्याधीतसाप्तदश्यवाक्यस्य मित्रविन्दादिप्रकरणा-धीतवाक्यवन्मित्रविंदादिमात्रविषयत्वेऽदृष्टार्थता स्यात्सा त्वाप्रवृत्ति-विशेषकरत्वेन दृष्टार्थत्वे संभवत्यन्याय्येति यासु सौर्यादिविकृतिषु

साप्तदश्यं न श्रुतं तास्वनारभ्याधीतं पाञ्चदश्येनातिदिष्टेन विकल्पतां श्रुतसाप्तदश्यासु तु विकल्पापवादो नियमार्थमस्तु। न च सौर्यादौ कथं विकल्पोऽनारभ्याधीतेनाप्युपदिष्टसाप्तदश्येनातिदिष्टपाञ्चदश्य-बाधादिति वाच्यम्। अनारभ्याधीतं हि साप्तदश्यवाक्यं स्वस्य मित्रविन्दादिगतौ स्ववैयर्थ्यात्सौर्यादिगतौ चातिदेशबाधे प्राकरणिक-साप्तदश्यवाक्यवैयर्थ्यात्सौर्यादिकं गत्वापि तत्र पाञ्चदश्यातिदेशं चा बाधित्वा विकल्प्यते। यथा न तौ पशौ करोतीति पशावाज्यभागप्रति-षेधश्चोदकादाज्यभागयोरप्राप्तावप्रसक्तप्रतिषेधतया स्ववैयर्थ्यात्प्राप्त-योश्चात्यन्तप्रतिषेधे चोदकाप्रामाण्यापत्तेराज्यभागातिदेशमबाधित्वा विकल्पत इति।

तदिदं ग्रन्थादर्शनमूलमन्याय्यमतिप्रसक्तं च। अनारभ्याधीतं साप्तदश्यवाक्यं न केवलादृष्टार्थं किंतु द्वारैदमर्थ्यपरं प्राकरणिकं तु पूर्वविशेषान्वयार्थमिति मीमांसाग्रन्थाः। न्याय्यं च तत्। न हि संबन्धद्वयस्य वाक्यद्वये बोधके संभवत्येकेन तद्बोधनं युक्तम्। गौरवात्। यदि त्वेवं परिभाष्यते एकेनैव वाक्येन संबन्धद्वयबोधन-संभवेऽन्येनान्यतरसंबन्धबोधनमेवादृष्टार्थता। तद्वयाख्योपदेशाति-देशन्यायोऽपि त्यज्यते। ततोतिप्रसङ्गः। सार्वकाम्यवाक्येनैव सिद्धे स्वर्गकामवाक्यवैयर्थ्यात्परिभाषितादृष्टार्थत्वाच्चोत्पत्तिशिष्ट-न्यायं त्यक्त्वाष्टाकपालादिभिः सह वैकल्पिकं चीनांशुकादिद्रव्यं लोके कल्पलक्षणया छागादिशब्देन वेद इव स्वर्गशब्देनोक्तं विधीयेत। मुख्यस्वर्गकामना चाङ्गत्वेन प्रवृत्तिविशेषकरत्वात्। इत्युपेक्ष्या सर्वशास्त्रविप्लवावहा न्यायाभासोत्प्रेक्षा दीक्षितस्याग्नेय्याधिकरण-न्यायात्त्वेकैकसंबन्धपरत्वमेव युक्तमेकैकसाप्तदश्यवाक्यस्येति।

अथ 'नास्त्येवोपांशुयाज' इत्येकोनचत्वारिंशत्तमश्लोकदूषणम्।

यदुक्तमपूर्वविधिलक्षणे सर्वोद्देश्यानुवृत्तिरप्राप्तेरात्यन्तिकत्व-

मिति पक्षे त्रेधा तण्डुलान्विभजेदिति विधावव्याप्तिस्तत्र दार्शिक-हविषां मध्ये पूर्वदेवताभ्योऽपनयविभागयोस्तण्डुलदधिश्रितेष्वर्थं सिद्धत्वेनोपांशुयाजाज्यमात्रे विधेश्चारितार्थ्यादिति तदाक्षेपार्थ-एकोनचत्वारिंशत्तमः श्लोकः 'नास्त्येवोपांशुयाजो दधिश्रृतसहितः पौर्णमास्यां विधानादि'त्यादिः। तस्यार्थः। अमावास्यायामुपांशुयाजो नास्त्येव उपांशु पौर्णमास्यां यजन्निति पौर्णमास्यां तद्विधानात्। न च बह्वृचब्राह्मणेऽमावास्याप्रकरणे उपांशुज्यायानुवाक्यायुगलपाठात्तस्या मपि सोऽस्तीति वाच्यम्। प्रधानस्योपांशुयाजस्य पौर्णमासीकालत्वे तदङ्गतया मन्त्रस्यान्यत्र पठितस्यापि तद्गामित्वात्। उभौ च पूर्वोक्त-रपक्षौ दशमाधिकरणे सूत्रकृतैव कृतौ'अपि वा पौर्णमास्यां स्यात्प्रधान-शब्दसंयोगान्मन्त्रो यथाप्रधानं स्यादि'त्यत्र। नचैवमुपांशुयाजे वचनाद्यथा प्रकृतीतिषाष्ठमधिकरणं कथं तस्य कृत्वाचिन्तात्वोक्तेः। तस्माद्विभागस्तण्डुलदधिश्रृतविषय एव सन्न देवतान्तरविधिनैव प्राप्त इति तद्विध्युक्तिराकरग्रन्थेषु हेयैवेति।

तदेतदाकरग्रन्थविरोधादेव तदुपपादनाशक्तिमात्रमाविष्कृतम्। तथाहि सत्यं पौर्णमास्यामिवोपांशुयाजः षाष्ठीव कृत्वा चिन्तैव तथापि विभागो विधेय एव। यथा हि विध्यार्थापत्तिप्राप्तापि स्तुतिरर्थवादाश्रयणे तदानर्थक्यं परिहर्तुं तैरेव कृतोपयुज्यते। एवमिहाप्यनुवादमात्रानर्थक्याद्विध्युद्देशोपयुक्तयोर्निमित्तनैमित्तिकयो र्मध्येऽर्थवादायोगाच्चेति।

अथ 'प्रत्येकं द्रव्ययुग्मे' इतिचत्वारिंशत्तमश्लोकदूषणम्।

एवमभ्युदयेष्टिवाक्ये दार्शिकहविषां पूर्वदेवताभ्योपनयस्या-पेक्षामङ्गीकृत्य तस्यार्थसिद्धत्वाद्विधिवैयर्थ्यमुक्तम्। इदानीं तदपेक्षैयव नास्तीति तस्य वैयर्थ्यमित्युक्तयै 'प्रत्येकं द्रव्ययुग्मे' इति चत्वारिंशत्तमः श्लोकः।

तस्यार्थः । भवेदिह दार्शिकहविषां देवतापनयापेक्षा यदि तेषां देवतान्तरान्वयार्थानि मध्यमादिवाक्यानि भवेयुः । तदेव त्वसिद्धं तथात्वे वाक्यभेदापत्तेः । यद्यप्यत्र दातप्रदातृशिपिविष्टशब्दानां श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात्पदद्वयप्रतिपाद्यं विशिष्टदेवताकारकमेव विधेयं न तु देवतातद्गुणाश्च प्रत्येकं विधेयाः । अभ्युदयेष्टिप्रकरणे च सह श्रपयतीति वचसो देवतैक्याद्दधिस्थविष्ट्योः श्रतानि द्वयोश्च सहपाकविधायिनः सत्वास्तच्चार्थेसिद्धस्य चरुत्वस्यानुवादात्रैतेषामनेकेषामर्थानां विधाननिमित्तो वाक्यभेदः प्रसज्यते । तथापि दधिवाक्ये दधिस्थविष्टेषु श्टनवाक्ये क्षोदिष्टेषु च प्रत्येकं देवतासंयोजनाद्वाक्यभेदापत्तेः । पशुकामेष्टौ यथाकर्मान्तरविधिर्नवमे उक्तस्तथात्रापि । न च तत्र न प्रकृतकर्मप्रत्यभिज्ञास्ति । इह त्वस्तीति वैषम्यम् । षष्ठे यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र प्रकृतकर्मप्रत्यभिज्ञानेपि वाक्यभेदभिया कर्मान्तरत्वोक्तेः । इयांस्तु भेदस्तत्र द्रव्यतत्परिमाणे पाक्षिकप्राप्ते चेन्द्रे नित्यवच्छ्रुतेन्द्रदेवतेति विधेयानैक्यमुद्देश्यानैक्यमिति । एवं कर्मान्तरविधौ तण्डुलादीनामुपादेयत्वादुपादेये च प्रकृतग्रहणाभावान्न पूर्वदेवताया मयं विधेरुपयोगः । यदि बिभियाद्भिमोदेष्यतीति महारात्रे हवींपि निर्वपेत्फलीकृतैस्तण्डुलैरुपसीतार्धं दधि आतञ्चनार्थं निदध्यादर्धं तत् । यद्यभ्युदियात्तेनातञ्च्य प्रचरेद्यदि नाभ्युदियान्न ब्राह्मणं भोजयेदिति । आतञ्चनाभ्यासदर्शनाल्लिङ्गादपि कर्मांतरपक्षे लौकिकदध्याद्युपादेयम् । कर्मांतरे ह्युपादेयत्वाल्लौकिकदध्याद्युपादाने सायंदोहेनाकालकृतेनापि प्रायश्चित्तनिर्हृतकालापराधदोषेण मुख्यकाले दर्शः कर्तव्यः । न दध्यन्तरमुत्पाद्यं यदि त्वभ्युदयेष्टिर्दर्शकर्मैव तदा तदर्थं कृतेन दध्ना तस्यैवानुष्ठितत्वान्मुख्यकालकर्त्तव्यदर्शार्थमवश्यं दध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनं तत्रार्धेनैवेतिनियमः क्रियत इति । नन्वेवं कर्मान्तरपक्षे प्रकृतग्रहणाभावार्थं लिङ्गदर्शनोक्त्यैव कर्मान्तरपक्षे लिङ्गानु-

पपत्तेस्तदभ्युपगमो न युक्तः। उच्यते। परमतेन परो बोधनीय इति न्यायेन तत्र कर्मान्तरविधावुपादेयत्वेन लिङ्गाच्च प्रकृतग्रहणाभावाद्वैव-तापनयविधिवैयर्थ्यमुक्तम्। वस्तुतस्तु न केवलं सिद्धान्त एवानुपपन्नः। किंतु लिङ्गमप्यनुपपन्नमेव। कर्मान्तरपक्षेऽप्यकालकृतदध्नः कर्मानर्हतयातञ्चनाभ्यासोपपत्तेः। उपादेयत्वेपि च प्रकृतग्रहणनियमात्। अस्ति ह्यातञ्चनवाक्ये तल्लिङ्गद्वयम्। फलीकृतैस्तण्डुलैरुपासीतेति हि फलीकरणपर्यन्तमेव कृत्वाभ्युदयसदसद्भावनिर्णय-पर्यन्तं च प्रतीक्षणं प्रकृताग्रहणेऽदृष्टार्थं स्यात्। तथाऽतञ्चनार्थ-दध्यर्धस्याभ्युदयाभावपक्ष इव तदन्यस्य दध्यर्धस्याभ्युदयपक्षे प्रतिपत्त्यपेक्षस्य तद्विधानादिदं गम्यते। अभ्युदयेऽष्टयां तदेव हविरिति।

तदेतदप्यनतिश्रुतमीमांसकसिद्धान्तमतीनेवातिभीषयेद्दूषणम्। तथाहि। यत्तावदुक्तमार्तिवाक्येऽनेकगुणोपादानादिवाभ्युदयेष्टिवाक्ये ऽनेकोद्देश्यसमावेशाद्वाक्यभेदप्रसङ्गेन कर्मान्तरविधिरेव युक्तो न दर्शेष्टावेव देवतान्तरमात्रमिति। तन्मीमांसासिद्धान्तन्यायानभि-ज्ञतामेवाभिव्यनक्ति। आनर्थक्यप्रतीघाताद्धि तात्पर्यग्रहेण वाक्यभेदा-दिदोषोपि पराक्रियते इतिमीमांसकसिद्धान्ततत्त्वम्। तद्यथा षष्ठे यस्योभावाग्नी अभिनिम्लोचेयातामभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चि-त्तिरित्यत्रोभयत्वरूपनिमित्तविशेषणविवक्षायां वाक्यभेदमाशङ्क्या-ग्निद्वयोत्पादकस्वभावपुनराधेयोत्पन्नाहवनीयान्तराद्यानर्थक्येन तात्प-र्यग्रहान्न वाक्यभेददोष इत्युक्तम्। तथा षष्ठ एव यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र मृष्यामहे हविषां विशेषणमित्युक्तम्। तत्राप्युभयत्वस्यैव हविषोऽप्यार्तिविशेषणस्य विवक्षायां वाक्यभेदः स्यादित्याशङ्क्यार्तेर्नित्यत्वेन यच्छब्दोपक्रान्त-निमित्तप्रतीत्यानर्थक्यापत्त्या तात्पर्यग्रहान्नासौ दोष इत्युक्तम्। एवं च इतः सिद्धान्ता एतेनैव न्यायेन तत्र तत्रोक्ताः। अभ्युदयेष्टिवाक्येऽच

कर्मान्तरविधौ दध्नोऽणिष्ठानां च श्रुतस्य क्षोदिष्ठानां चोद्देश्यत्वंहित्वो पादेयत्वं च प्रकल्प्य ताभ्यां वाक्याभ्यां कर्मद्वयविधौ दध्नि चरुं श्रृते चरुमित्यनेनैव सहश्रपणसिद्धेः सहश्रपयतीति विधेरानर्थक्यमापद्येत। प्रकृतदर्शेष्टावेव तु देवतामात्रविधौ श्रृताणिष्ठक्षोदिष्ठानां प्रत्येकमेव श्रपणे प्राप्ते सह श्रपयतीति विधिरर्थवान् भवतीति सहश्रपणवाक्येन ये मध्यमाः स्युरिति वाक्यस्थं निर्वपेदिति पदं न वारद्वयमेवानुषज्यते। किंतु त्रतुः कृत्व इतितात्पर्यग्रहान्न वाक्यभेददोष इति।

यदप्युक्तम् अमावास्यामुपांशुयाजस्य मीमांसकसिद्धान्तेऽनभ्युपगमात्तादर्थ्येन देवतापनयविधेरर्थवत्वायोगान्मध्यमादिषु तु देवतान्तरसम्बन्धान्यथाऽनुपपत्त्यैव पूर्वदेवतापनयस्याक्षेपतः सिद्धेस्तद्विधिरनर्थक इति। तदप्यधिकरणान्तरविस्मरणजन्यम्।

यत्तु-एव ह्यधिकरणान्तरे सिद्धान्तितं सामिनिर्वापेऽवशिष्टमुष्टीनामपदार्थत्वान्न देवतान्तरसंयोगविधिस्तत्र प्रवर्त्तते पूर्वदेवतापनयविधिस्तु यथाकथंचित्संयोगमात्रापेक्षत्वात् प्रवर्त्तत एवेति तेनार्धनिर्वापावशिष्टमुष्टिषु देवतान्तरसंबन्धविध्यविषयभूतेष्वर्थवानेव पूर्वदेवतापनयविधिरिति।

यच्चोक्तं कर्मान्तरविधौ दध्यादेरुपादेयत्वाल्लिङ्गाश्च प्रकृतग्रहणाभावाद्देवतापनयविधेर्वैयर्थ्यमित्युक्तम्। परमतेन परो बोधनीयइति न्यायमासृत्यापादितः। सोऽपि कर्मान्तरविधिवृक्षोन्मूलनादेवापास्तः।

यत्तु वस्तुतस्त्वित्यादिना लिङ्गदूषणं कृतम्। तदपि न। कालापराधदोषनिर्हरणार्थं हीदं कर्म यथा वा कालकृतापनयनदेवतापरिग्रहादिप्राप्तोपचारः कालापराधदोष एवमकालसंपादनेन कर्मानर्हत्वमपि दध्यादेः कालापराधदोषः। अतः कर्मान्तरपक्षे तेनैव

दधिकाले करिष्यमाणदर्शकर्माहं कृतमिति आतञ्चनाभ्यासानुपपत्तिरेव।

यस्त्वग्निप्रणयनादिदोष एवैतत्कर्मणा निह्रियते न वध्नः कर्मानर्हत्वमपीत्यत्र दृष्टान्त उक्तः न हि स्तेयप्रायश्चित्तेन स्तेयदोषनिर्हरणवत् स्तेयलब्धद्रव्यस्य कर्मार्हतापि क्रियते इति। सोपि न। स्तेयलब्धस्य हि कर्मार्हत्वं स्वत्वेन स्यात्। तच्चालौकिकोपायसाध्यमितिवेधेन स्तेयप्रायश्चित्तेनाशक्यं कर्तुम्। अकालसंपादनप्रयुक्तस्य तु कर्मानर्हत्वस्य प्रायश्चित्तनाश्यत्वेन बाधावतारोऽस्ति। उभयमपि चापेक्षितमित्युभयं प्रायश्चित्तेन क्रियते। तद्यथा षष्ठे सत्रायागूर्य विश्वजिता यजेतेत्यत्र सत्रं संकल्प्याकुर्वतो विश्वजिदिति सिद्धान्तयित्वोक्तम्। यथा सत्रत्यागदोषापाकरणं विश्वजिता क्रियते। एवं साकाङ्क्षत्वाविशेषात्सत्रनिवृत्त्यासाकाङ्क्षसत्रफलमपीति दध्नश्च साकाङ्क्षत्वं दीक्षितैरप्युक्तम्। तदभ्युदयपक्षे तदितरार्धस्य लौकिकदधिसाध्यायामभ्युदयेष्ट्यां दध्यन्तरोत्पादननिर्वर्त्यमुख्यकालदर्शेऽनुपयोगात्प्रत्तिपत्त्यपेक्षास्तीति प्रतिपत्तिरभ्युपवर्ण्यते इति ग्रन्थेन।

यतूक्तं कर्मान्तरपक्षेपि प्रकृतहविर्ग्रहणे पेषणात्प्राक्प्रतिक्षणं दृष्टार्थं भवतीति। तदपि न। विकल्पासहत्वात्। प्रतिक्षणमात्रस्य वा दृष्टार्थत्वं ब्रूषे प्रतिक्षणे पेषणप्राक्कालस्य वा नाद्यः। लौकिकहविर्ग्रहणेप्यभ्युदये ष्टिरूपकर्मान्तरानुष्ठानरूपदृष्टप्रयोजनार्थत्वात्प्रतीक्षणस्य। न द्वितीयः। वैरूप्यात्। दृष्टार्थता हि पेषणात्प्राक्कालस्य तदोपयोक्ष्यमाणमध्यमादिरूपसत्त्वात्तवेष्टा। इदं च प्रतीक्षणं चन्द्राभ्युदयसदसत्वनिर्णयाय तत्राभ्युदयाभावपक्षे सर्वैस्तण्डुलैर्दर्शार्थपुरोडाशोत्पादनान्मध्यमादिरूपानुपयोगात्प्रतिक्षणं पेषणात्प्राक्कालमदृष्टार्थमेवेत्यभ्युदयपक्षेपि तददृष्टार्थमेवावैरूप्याय युक्तमिति कर्मान्तरपक्षे प्रकृतं न हविर्ग्राह्यं किं तु लौकिकमेवेति।

यत्तूक्तमातश्चर्थनास्य दध्यर्थस्याभ्युदयाभावपक्ष इव ब्राह्मणभोजनं तदन्यस्य दध्यर्थस्याभ्युदयपक्षो प्रतिपत्त्यपेक्षस्य न काचित्प्रतिपत्तिर्विहितेति तदेवाभ्युदयेष्टिरूपकर्मान्तरे साधनं ज्ञायत इति । तदपि न । कृतकार्यस्य हि प्रतिपत्त्यपेक्षा न चेदं दध्यर्थं कृतकार्यमिति न प्रतिपत्त्यपेक्षा । अथ कार्यापेक्षैव प्रतिपत्त्यपेक्षेत्युच्यते । यथा द्वयवदाननाशेऽवशिष्टपुरोडाशस्येति । तन्न । अकाले हि वृथा चेष्टयेदं संपादितं दध्यादि न तु विधिनाऽनुष्ठापितं तेन लौकिकमेवेदं लौकिकस्य तु लौकिकमेव कार्यं न तत्र वैधकार्यापेक्षा द्वयवदाननाशेऽवशिष्टपुरोडाशस्तु विधिनानुष्ठापित इति वैषम्यम् ।

अथ 'तर्हि स्यात्' इत्येकचत्वारिंशत्तमश्लोकदूषणम्—

'तर्हि स्याद् देवताभ्य' इत्यादौ त्वेकचत्वारिंशत्तमे श्लोकेऽभ्युदयेष्टेः कर्मान्तरत्वेऽपि तद्देवताभ्यः प्रकृतहविषां विभजनं सामान्यतः स त्रेधा तण्डुलान्विभजेदित्यनेन विधीयत इति पक्ष आशङ्क्य दूषितस्तत्तत्पक्षानभ्युपगमादेव निरस्तम् ।

अथ 'एवं प्राप्ते भणाम' इतिद्विचत्वारिंशत्तमश्लोकदूषणम्—

एवमव्याप्त्यतिव्याप्त्यादिदोषोद्भावनेन तत्प्रसङ्गाच्च केषांचित्सिद्धान्तानामाक्षेपे दीक्षितकृते दूषिते तत एव दीक्षितकृतानामपूर्वविध्यादिलक्षणान्तराणां वैयर्थ्येन दूषणे सिद्धे यदि कश्चित्तेषामपि लक्षणत्वमस्तु पृथिव्यादीनां पृथिवीत्वगन्धवत्त्वादिवदिति वदेत्तं प्रति प्रातिस्विकतत्तद्दूषणविशेषैरपूर्वविध्यादिलक्षणानि दीक्षितोक्तानि दूष्यन्ते । तत्र तावत्—'एवं प्राप्ते भणामस्त्रिविधविधिजुषां लक्षणानां विभागं दृष्टार्थो यः स सर्वो भवति नियम इत्यभ्युपेत्य व्यवस्थाम् । अर्थाद्वा शब्दतो वा स्वविषयगलितादेवकारान्नञो वा यः स्यात्कस्यापि बाधः सम्भवति परिसंख्येति रीतिं च कृत्वा' इति द्विचत्वारिंशत्तमश्लोकेन तल्लक्षणव्यवस्था कृता । तस्यार्थः । अप्राप्तविषयः प्राप्तविषयो वा यो

विधिर्दृष्टार्थः स सर्वोपि नियमविधिः। दृष्टार्थप्राप्तविषयोपि द्विविधः। विधिं विना स्वतः प्रसिद्धदृष्टप्रयोजनजननसामर्थ्यो विधिबलप्रसाध्य तज्जननसामर्थ्यश्च। तत्रौदुम्बरो यूपो भवतीत्याद्यः। प्रकृतौ यूपे पक्षप्राप्तोप्युदुम्बरः खदिरादिनियमविधिना निवर्तित इति विकृतावपि चोदकात्खदिरादेरेव प्राप्त्या प्रतिप्रसवविधिन्यायेन सोमापौष्णपशावप्राप्तैवौदुम्बरजातिरष्टास्रादिविशिष्टयूपाकृतिजनने स्वत एव प्रसिद्धदृष्टसामर्थ्याच्च। उत्तराधारशाखाछेदनमन्त्रोत्करपरिध्यादिर्द्वितीयः। विधिबलादेव हि हिरण्यगर्भमन्त्रस्य गौणवृत्तिकल्पनयेन्द्रप्रकाशने, इषेत्वेति मन्त्रस्य छिनद्मीत्यध्याहारेण शाखाच्छेदनप्रकाशने, उत्करस्य पृथ्वग्रताकरणेन, वाजिनपात्रधारणे परिधेःस्थविमग्रहेण पशुनियोजने च सामर्थ्यं प्रसाधनीयम्। ततश्च तद्द्वैविध्यात्तद्विषयो विधिरपि द्विविधः। एवं द्विविधोप्यप्राप्तप्राप्तिफलकदृष्टार्थविधौ नियमादृष्टमावश्यकम्। चोदकप्राप्तखदिरादिनापि सम्भवति यूपादिस्वरूपमात्रे उदुम्बरादिनियमविधानस्यानर्थक्यात् तदुक्तं 'दृष्टार्थेष्वपि सर्वेषु नियमादृष्टमिष्यत' इति। नानोपायसाध्येपि च दृष्टप्रयोजने कस्यचिदेव नियमोऽनर्थकस्तस्य क्रत्वपूर्वोपयोगित्वमपि तज्जन्यं द्वारं विनान्यानुपपन्नं क्रत्वपूर्वस्य कालान्तरोत्पत्तेः। एतदेव ह्यवहंत्यादौ नियमादृष्टकल्पनाबीजम्। तच्चेहापि तुल्यम्। नियमादृष्टे च सति नियमविधित्वमेव युक्तम्। अत एव पूतीकविधौ पक्षप्राप्त्यभावेपि नियमविधित्वम्। सर्वे द्रव्यविधयो नियमविधय इत्याकारे सकलमीमांसकप्रसिद्धिश्च। तथा नवमे पत्नीसंयाजान्तान्यहानि संतिष्ठत इत्यस्य भाष्यादौ नियमविधित्वमुक्तम्। तदप्यप्राप्तस्यैव पत्नीसंयाजान्तत्वस्य दृष्टार्थतामात्रेण न तु तस्य पाक्षिकप्राप्त्या तदसम्भवात्। उपांश्वादिहारियोजनपर्यन्तसोमयागो ह्यहः शब्देनोच्यते। यथोक्तं तन्त्ररत्ने 'ज्योतिष्टोमे ह्यहः शब्देनोपांश्वादिहारियोजनपर्यन्तं सोमयागः परिच्छिन्न' इति।

द्वादशाहे स द्वादशानामह्नां सहत्वसिद्ध्यर्थं हारियोजनानन्तरमेवावस्थानं प्राप्नोति। यदि तु वसतीवरीपर्यन्तानां पूर्वेषामवभृथादीनां चोत्तरेषामङ्गानां तन्त्रत्वेपि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगः स्यात्तेषां प्रधानशब्दत्वादित्येकादशन्यायेन प्रधानैरपृथक्कालान्यङ्गानि तत्तत्प्रधानकालभेदेनानुष्ठेयानीति तत्तत्सुत्याकालीनानामैष्टिकपाशुककर्मणां साङ्गानां तत्र तत्राहनि भेदेनानुष्ठानं प्राप्नुयात्तदा कार्त्स्न्येन पाशुकैष्टिकप्रयोगसमाप्त्यनन्तरमेवावस्थानं प्राप्नोति सर्वथापि पत्नीसंयाजानन्तरमवस्थानस्य न पाक्षिकी प्राप्तिरस्ति। अतः पत्नीसंयाजान्तोऽग्नीषोमीयः संतिष्ठत इतिवदप्राप्तविधिरेवायम्। सहत्वनिर्वाहकतया तु दृष्टार्थत्वात्तावन्मात्रेण नियमविधित्वं भाष्यादिषूक्तमिति समर्थनीयम्। अनियमे प्राप्ते पत्नीसंयाजान्तं संस्थातव्यमिति नियम्यत इति भाष्यं च हारियोजनान्तत्वादेरेव प्राप्त्या पत्नीसंयाजान्ततानियमस्याभावे प्राप्त इति योजनीयम्। यस्मिन्कस्मिंश्चिदनियमेनावस्थाने प्राप्ते पत्नीसंयाजान्तता नियम्यत इति। तन्त्ररत्नमपि हारियोजनप्रचारे पश्वादिसमानयनकर्मणि वा यस्मिन्कस्मिंश्चित्पत्नीसंयाजान्त नियमं विनाऽवस्थाने प्राप्ते इति योज्यम्। न तु यथाश्रुतं ग्राह्यम्। पत्नीसंयाजान्ततायाः अनियमस्य प्राप्त्यसम्भवस्योक्तत्वात्। तस्माद् दृष्टार्थः सर्वोपि नियमविधिरिति युक्तमेव। नचैवं पुत्रेष्टिकारीर्यादिविधेर्नियमविधित्वप्रसङ्गः। अदृष्टद्वारकत्वस्यापि विवक्षितत्वादिति। अर्थाद्वा विषयप्रच्युताल्लाक्षणिकशब्दाद्वा एवकाराद्वा नञ्पदाद्वा लभ्यो यस्य कस्यापि भावस्याभावस्य वा यो बाधः स सर्वोपि परिसंख्येति वदामः। तत्र निहायेडो बर्हिः प्रतिसमानयति जुह्वामौपभृतमिति कालविधेरर्थादुपरितनप्रयाजद्वये जौहवस्य प्राचीनप्रयाजत्रये औपभृतस्य च बाधः। ह्वे आहवनीय इत्यत्र यदाहवनीये जुहोतीति सामान्यशास्त्रप्राप्ते विधिरूपस्वरूपविषयबाधः। अत्र ह्येवावपन्तीत्येवकारेण

पवमानातिरिक्तस्तोत्रेष्वावापबाधः । न तौ पशौ करोतीति नञ्पदेनपशावाज्यभागबाधः । स्यादेतत्र नञ्पदलभ्यः सर्वोपिनिषेधः परिसंख्येत्यङ्गीकर्त्तुं युक्तं विधाविव निषेधेप्यपूर्वविध्यादिरूपेण त्रैविध्यसम्भवात् शक्यते हि दीक्षितो न जुहोतीत्यादिरपूर्वविधिः न हिंस्यादित्यादिर्नियमविधिः नानुयाजानित्यादिः परिसंख्येति वक्तुमिति चेन्मैवम् परिसंख्याशब्दार्थवर्जनबुद्धिजनकस्य नञोपि परिसंख्यात्वस्यासंप्रत्याख्येयतया तद्योगे न जुहोति न हिंस्यादित्यादेरपि परिसंख्यात्वस्यानिवार्यत्वात् । तत्र चान्यत्रेति लक्षणानुसारेणापि तस्य परिसंख्यात्वप्राप्तिः। तद्व्यावर्त्तनाय तत्र विशेषणान्तरविवक्षायाश्च परिसंख्यालक्षणाक्षेपे दूषितत्वात् । अत्र ह्येवावपंतीतिपरिसंख्यायां तत्र चान्यत्र प्राप्त इति यथाश्रुतलक्षणस्याव्याप्त्यभावाच्च । तस्मादर्थाल्लक्ष्य एवकारप्रतिपाद्यो नञर्थभूतश्च सर्वोपि निषेधः परिसंख्येति युक्तम्। उक्तं च न्यायसुधायां 'परिसंख्यावर्जनबुद्धिस्तदर्थो नञादिः परिसंख्याशब्दस्तद्योगाद् ब्राह्मणो न हन्तव्यः नेक्षेतोद्यन्तमादित्यमित्यादीनामेव श्रुत्या परिसंख्यात्वम् । निषेधपर्युदासविशेषात्तु व्यवहारसिद्धेर्न परिसंख्यव्यपदेशः' इति। सत्यमेव वदितव्यमित्यादीनामेवकारश्रुत्या नियमेनान्यत्र तु फलेनैव नियमपरिसंख्याव्यपदेश इति ।

सोयं सिद्धान्तोपक्रम एव विस्वर इवोङ्कारः प्रतिभाति । तथाहि यत्तावद् दृष्टार्थत्वं नियमविधिलक्षणमित्युक्तम् । तदयुक्तम् । उत्तरेऽहन्द्विरात्रस्य गृह्यत इति पूर्वोक्तनियमविधावव्याप्तेः । ग्रहणविधीनामदृष्टार्थत्वस्य पशुसोमधिकरणे स्थापितत्वात् । तस्य च षोडशिग्रहणविधावपि तुल्यत्वात् । एवं सर्वत्र यददृष्टार्थं प्रकृतौ वैकल्पिकं विकृतौ नित्यतायै पुनः श्रूयते । तेषु सर्वेषु नियमविधिष्वव्याप्तिः ।

यत्तूक्तमतिहायेडो बर्हिः प्रतिसमानयति इत्यत्राथा-

त्परिसंख्येति। द्वे आहवनीय इत्यत्र तु लक्षणया परिसंख्येति। तदत्रोदाहरणद्वये परिसंख्यात्वोक्तिरपसिद्धान्त एव। तथाहि आद्ये तावदुदाहरण उपसंहारत्वमुक्तं चतुर्थे समानयनं तु मुख्यं स्याल्लिङ्गदर्शनादित्यत्राधिकरणे शास्त्रदीपिकायां सिद्धान्ते प्रयाजानुयाजेभ्य इत्यविशेषश्रवणमतिहायेडो बर्हिः प्रतीतिकालविधिवलादुपरितनप्रयाजद्वयविषयमुपसंह्रियत इति ग्रन्थेन। तथा प्राभाकरमते पारद्रश्वना वरदराजेनाप्युक्तम् अस्मिन्नेवाधिकरणे सिद्धान्त एव। समिदादीनामेकैकस्यापि प्रयाजपदवाच्यत्वान्न विशेषोपसंहारेपि प्रयाजश्रुतेर्विरोध इति। अथोपसंहारस्यापि परिसंख्यात्वान्नापसिद्धान्त इति। तन्न। एवं सति गृहमेधीयाधिकरणे भाष्यकारादिसर्वसंमता अष्टौ पक्षविकल्पा नोपपद्येरन्। पञ्चमस्य परिसंख्यात्वात्सप्तमस्यापि चोपसंहारात्मकस्य परिसंख्यान्तर्गतेः। तथा दशमेऽभावादतिरात्रेषु गृह्यत इत्यत्राऽधिकरणे 'ननूपसंहारः परिसंख्या वा षोडश्युत्तर'इति भाष्यं तदनुपपन्नं स्यात्। परिसंख्योपसंहारयोरभेदे गृहमेधीयाधिकरणगतभाष्यकारादिसर्वसम्मताष्टपक्षविकल्पानुपपत्त्यैव च प्रतिपदं प्रथमश्लोकादिषु दीक्षितैर्गृहमेधीयाष्टमपक्षे परिसंख्येत्युक्तमप्यपसिद्धान्त एव। न हि तत्र कस्मिन्नपि मीमांसाग्रन्थे परिसंख्येति व्यवहृतं किंत्वपूर्वताचोदकपरिलोप इति वा व्यवहृतं सर्वैः। मीमांसकसिद्धान्ताभिज्ञकृतवेदान्तग्रन्थेष्वपि वाचस्पत्यकल्पतरुप्रभृतिष्वेवमेव व्यवहृत न तु कैश्चिदपि परिसंख्येति। तेनाज्यभागविधिरपूर्वविधावेवान्तर्भूतः प्रकृतिगत इवेमामगृभ्णन्नितिवत्त्वन्यतो नित्यं प्राप्स्यमानो योऽर्थस्तद्विषयत्वसाम्यात्परिसंख्यात्वभ्रमोऽत्र दीक्षितानाम्। अन्यथानेन साम्येनोपसंहारस्यापि परिसंख्यात्वं कश्चिद्भ्रान्तो वदेत्तत्र चोक्तमेव। अत एव यथा गृहमेधीये पञ्चमे पक्ष इति वार्तिककृता तत्र चान्यत्र चेति सप्तम्योः प्राप्त इति सप्तम्या समानाधिकरण्यपक्षे पञ्चमपक्ष एव परिसंख्यात्वमुक्तमष्टमे। यथा गृहमे-

धीयेऽष्टमे पक्ष इति भाष्यकारेणापि दशमे सप्तमपादे आज्यभागवद्धेति सूत्रे आज्यभागवदिति दृष्टान्तं व्याकुर्वता यथागृहमेधीये पञ्चमे पक्षे आज्यभागग्रहणं परिसंख्यार्थमित्युक्तम् । न यथाष्टमे पक्ष इति । किंच गृहमेधीयाज्यभागश्रवणस्य सिद्धान्ते परिसंख्यात्वे गृहमेधीयाधिकरणादेकान्तरितोत्तराधिकरणे स्विष्टकृति भक्षप्रतिषेधः स्यादित्यत्र गृहमेधीय एव प्राकृताङ्गपुनः श्रवणं कृत्वा चिन्त्यत इतिभाष्यादौ कृत्वाचिन्तात्वोक्तिरयुक्ता स्यात्सिद्धान्त एव चिन्त्योपपत्तेरिति । नन्वेवमपि तत्र चान्यत्र च इति समानाधिकरण सप्तमी पक्षेणपरिसंख्यालक्षणसत्त्वेकथं न परिसंख्यात्वमितिचेन्न–गृहमेधीयाकरणसिद्धान्तपर्यालोचनया परिसंख्यालक्षणस्यैवासत्वप्रतीतेः । स तु ग्रन्थः—आज्यभागयोर्हि प्रकृतौ श्रुतयागरूपव्यतिरेकेण प्रकरणाम्नानकल्प्यं स्वापूर्वद्वारेण यागगतव्यापाररूपमपरमस्ति तद्रूपलक्षणार्थं चेदमाज्यभागश्रवणमन्यथानर्थक्यादिति । अनेन चानर्थक्यबलात्प्राकृत एव करणोपकारस्तत्रानेकाङ्गजन्योपीह शक्यसंबधादाज्यभागमात्रविशिष्टतयाऽजहत्स्वार्थलक्षणया लक्षित उपदिश्यत इति तेनैव गृहमेधीयः करणोपकारापेक्षो निराकाङ्क्षो जात इत्यपूर्वतेति सिद्धान्त उपपादितः । अतः प्राकृतस्यैवोपकारस्येहाज्यभागमात्रविशिष्टस्य विधानात्तत्र चान्यत्र चेति विधेयबाध्ययोर्भेदगर्भं परिसंख्यालक्षणं नास्तीति । अतश्चोपसंहारे अपूर्वतार्थे चाज्यभागादिविधौ न परिसंख्यात्वमिति सिद्धम् । नन्वेवमपूर्वतापरविधेः परिसंख्यायाश्च भेदसिद्धयावप्युपसंहारपरिसंख्याविध्योः कथं भेदः । उपसंहारे हि तत्र त्वान्यत्र च प्राताविति परिसंख्यालक्षणसत्वादिति चेदुच्यते—उपसंहारः प्रत्यक्ष एव सामान्यविधावित्युक्तम् । तेनाप्राप्तपरिसंख्यातस्तावत्स्पष्ट एव भेदः । प्राप्तपरिसंख्यातोपि भेदः 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभव' इति वार्तिके पूर्वार्धार्थविषय एवोपसंहार इति वदतोत्तरार्धार्थ-

विषयैव परिसंख्या न कदाचित्पूर्वार्धार्थविषयेति सूचनात् स्पष्ट एव। स च विषयोस्माभिः पूर्वमुक्त एव हृदयस्याग्रेवद्यतीत्यादिः पशुविधेरवयविविषयत्वात्सामान्यविधित्वाभावे स्पष्टत्वादितिसर्वं सुस्थम्।

यत्तु—द्वे आहनीय इत्यादिनैषु विधिषु लक्षणया परिसंख्यात्वमुक्तम्। तदस्माभिश्चतुर्थश्लोकोत्तरार्धदूषणावसर एव दूषितम्। इह च सिद्धान्तीये दीक्षितग्रन्थे ऽदृष्टार्थोऽपूर्वविधिरित्यपूर्वविधिलक्षणमभिप्रेतमितिकेचि द्वर्णयन्ति दृष्टार्थस्य नियमविधिलक्षणे नोक्तेः। तदप्यत्यन्तासम्बद्धम्। प्रागुक्ते उत्तरेऽहन्द्विरात्रस्य गृह्यत इत्यादौ नियमविधित्वेन तत्तदधिकरणेषूक्तेऽव्याप्तेरिति।

यदपि नवमे पत्नीसंयाजान्तान्यहानि संतिष्ठत इत्यादिनोक्तम्। तथा हि द्वौ हि पक्षौ भवतोक्तौ हारियोजनान्तरमेवावस्थानं प्राप्नोतीत्येकः। द्वितीयस्य तु सुत्याकालीनैष्टिकपांशुककर्मावृत्तेरेकादशे उक्ते हारियोजनोत्तरकृत्स्नतदङ्गसमाप्तौ चेति। ननु पत्नीसंयाजानन्तरं पाक्षिकमप्यवस्थानं प्राप्नोतीत्यपूर्वविधिः स्यात्पत्नीसंयाजान्तोग्नीषीय इतिवत्। तेनाप्राप्तांशपूरणफलकत्वं न नियमविधिलक्षलक्षणं किंतु दृष्टार्थत्वं सहत्वसिद्धया चात्र दृष्टार्थत्वमस्तीति। तदिदं न्यायाबोधविजृम्भितम्। एकादशे ह्ययं न्यायः। द्वादशाहशब्देन सुत्याद्वादशोक्तेः सुत्यान्तर्गतानामावृत्तिरिति तेन हारियोजनान्तस्यैव पार्थक्यनियमे तदुत्तरेषां सौमिकानां पाशुकानां वावृत्त्यनियमे किमुत्तरस्य सर्वस्यैव सहत्वसिद्ध्यै तन्त्रत्वनुतावृत्त्यानुष्ठानप्रवृत्तेः कियत एव तंत्रत्वं दशानां वा पदार्थानां पञ्चदशानां विंशत्तीनां वेत्याद्यनियमप्रसक्तिरस्त्येव तत्र पत्नीसंयाजान्ततानियमो दुर्घट एव। ग्रन्थव्याख्यापि चा सम्बद्धैव कृता। हारियोजनोपश्वंत्यांगे वा ज्ञाते ऽवस्थेयमित्यनियमे प्राप्ते तदुभयभिन्नपत्नीसंयाजान्तता नियम इत्यसम्बद्धम्। न हि ययोः कयोश्चिदनियतप्रसक्तौ तृतीयस्या-

प्रसक्तस्य नियमोद्ययावन्मीमांसकेन केनचिन्निरूपितम्। किंचैवं सति नखविदलनाद्यवघातादेरनियमप्रसक्तौ अदृष्टार्थस्यापि यागप्रोक्षणादेर्दृष्टार्थस्यापि श्रवणादेर्नियमः किं न स्यात्। किंचैवं वादिन आयुष्मतोऽप्रांशुपूरणातिरिक्तनियमशब्दवाच्यं किमभिप्रेतमिति न विद्मः।

वस्तुतस्तु—प्रस्तुते ययोः कयोश्चिदपि नानियता प्राप्तिरस्ति। प्रथमपक्षे हारियोजनान्तरमेव पक्षान्तरे पश्चाद्यंरयाङ्गानन्तरमेवावस्थानप्राप्तेरित्यास्तां तावत्।

संप्रदायेऽनधीती वा तौतायितमते भवान्।
अनधीत्यैव वा ब्रूयाज्जडवत्कथमन्यथा॥

अथ 'नित्यौदास्यान्य' इतित्रिचत्वारिंशत्तमश्लोकदूषणम्।

एतच्छ्लोकोक्तान्येव लक्षणानि विवरीतुं त्रिचत्वरिंशत्तमः श्लोको 'नित्यौदास्यान्यकिञ्चिद्विगलितनियतं यस्य तत्प्राप्तिमात्रमित्यादिः। तस्यार्थ एवं तैरेव विवृतः। नियमस्य प्राप्तिं कुर्वन्नियमविधिः निवृत्तिप्राप्तिं कुर्वन् परिसंख्याविधिःनियमपरिसंख्यान्यप्राप्तिकारी विधिरपूर्वविधिः। तत्प्राप्तिकारित्वं च यथाकथंचिद्विवक्षितं न तु कश्चित्तत्र विशेषो विवक्षितः। तेन विधिविषयस्यान्यस्य वा यस्य कस्यचित् चोदितस्यात्यन्ताप्राप्तस्य वा यस्यकस्यचित् स्वरूपेण किंचिद्विशेषणान्तरावच्छिन्नत्वेन वा रूपेण प्रकृतविध्युद्देश्येपि सर्वत्र क्वचिदेव वा क्वचिदपि कियत्यामपि प्राप्तौ सत्यामसत्यां वा यथाकथंचित्प्राप्तिं कुर्वन्नित्यर्थः। तेन पूर्वोक्ताः सर्वा अव्याप्तयो निरस्ताः। तथा ह्याग्नेयादिग्राह्यविधिषु तावन्नाव्याप्तिः। तेषां विधिविषयप्राप्तिकारित्वाभावेपि तदाश्रितगुणकामप्राप्तिकारित्वात्। अग्रनादिविधियस्तु पूतीकादिविधिवन्नियमविधयो वक्तव्या इति न तेष्वव्याप्तिः शङ्क्या। तद्विधिविधेयस्यानुद्देश्ये प्राप्तिकारिणि तावभूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति विधावपि

नाव्याप्तिः। उद्देश्येऽन्यत्र वेति विशेषानुपादानात् । स्वर्गार्थाग्निहोत्रविधिषु नानाशाखाम्नातविधिषु च नाव्याप्तिः । तेषां स्वरूपेण प्राप्तिकारित्वाभावेऽप्यभ्युदयशिरस्कत्वेन प्राप्तिकारित्वात् । ननु न स्वरूपेण प्राप्तमप्राप्तविशेषणविशिष्टरूपेण प्रापणीये स्वयं प्रापणीयतां भजते । प्राप्ताप्राप्तविवेकेन विशेषणमात्रे प्रापणीयत्वपर्यवसानात् । न । आघाराग्निहोत्राधिकरणे सर्वत्र गुणविधावपि विशिष्टविधिरेव तन्त्रमित्युक्तेः । अनुपादेयफलकालादिविधीनां च प्राप्तकर्मविषयत्वेपि फलकालादिसम्बन्धित्वरूपेण कर्मविधित्वाभ्युपगमात् । प्रतिप्रसवविधिषु सार्वकाम्यादिविधिषु ब्रह्मसम्बन्धविधिषु च नाव्याप्तिः त्रिकालाप्राप्तस्येति विशेषस्योद्देश्ये सर्वत्रेति विशेषस्य क्रियत्यामपि प्राप्तावसत्यामेवेति विशेषस्य चाविवक्षितत्वात् । एवं च सर्वस्मिन्नपि नियमविधौ परिसंख्यायां वातिव्याप्तिरेतावदवशिष्यते । तन्निरासाय नियमस्य परिसंख्यान्यत्वं प्रापणीयविशेषणं कृतम् । ननु किमनया कुसृष्ट्या नियमपरिसंख्यान्यो विधिरपूर्वविधिरित्येव लक्षणमार्जवेन क्रियतामिति चेन्न । तथा सति क्वचिदंशेऽपूर्वविधिरूपाणामंशान्तरे तु नियमविधिरूपाणां परिसंख्यारूपाणां च विधीनां नियमपरिसंख्याविधिभिन्नत्वाभावेनासंग्रहप्रसङ्गात् । सन्ति हि तथाविधा विधयो नवमपद्यापादनिकायां प्रागुदाहृताः । ते चानुपदमेव विवेचयिष्यन्ते । ननूक्तलक्षणमनुपपन्नं प्राकृतपृष्ठविध्योरव्याप्तेः । ताभ्यां विधिभ्यां प्रापणीययोर्बृहद्रथन्तरसाधनकपृष्ठाख्यस्तोत्रयोर्विकृतिविशेषेषु उपहव्यादिषु विध्यन्तरैर्नियम्यत्वात् । नच प्रकृतविध्यनियम्यं विवक्षितम् प्रकृतपृष्ठानियम्याप्रसिद्ध्या तदन्यत्वोक्त्यसंभवेन तथाप्युक्ताव्याप्तितादवस्थ्यादिति चेन्न । किंचिद्विषयकप्राप्तित्वावच्छिन्नं नित्यप्राप्तौदासीन्यभिन्नकिंचिन्निवृत्तिनियतं यस्य तन्नियम्यादीति विवक्षितत्वात् । अस्ति च प्रकृते ज्योतिष्टोमे बृहत्प्राप्तित्वावच्छिन्नस्यौदासीन्यभिन्नविदलननिवृत्त्या नियतेभ्योऽवहननप्राप्त्या-

दिभ्योऽन्यत्वम्। ननु बृहद्रथन्तरयोः प्रकृतौ विकल्पितत्वात्तयो प्राप्तिरन्योन्यनिवृत्तिनियतैव। तदेतद्रथन्तराधिकरणसिद्धान्त उक्तम्। दशमे चोभयसाम्निनैमित्तिकमित्यधिकरणे संसवादौ बृहद्रथन्तरपृष्ठयोः समुच्चये तयोरन्योन्यव्यावर्त्तकत्वाभावेन निमित्तत्वाभावान्नैमित्तिकमप्यग्रताद्वयमुपपपन्ति रथन्तरस्य प्रतिपदं कुर्यादग्रवर्तीं बृहत्पृष्ठस्येति नैमित्तिकं प्रतिपद् द्वयं न कर्त्तव्यमिति चेत्। उच्यते। रथन्तरं पृष्ठं भवतीत्यादिवाक्याभ्यां तयोर्ज्योतिष्टोमे प्राप्तिर्नान्योन्यव्यावर्त्तिका दृष्टार्थत्वात् प्रयाजानुयाजादिवत्समुच्चयस्यैव ततः प्राप्तेः। तद्विधिविहितं तु तदुभयमनूद्य साक्षादेव विकल्पं विदधता वाक्यान्तरेण रथन्तरं पृष्ठं बृहत्पृष्ठं वा कर्त्तव्यं न तूभयं समुच्चितमिति सिद्धे तदपेक्षानिर्देशादि यदि बृहत्सामेत्यादयस्तैरनूद्यमान एव रथन्तरादिसम्बन्धोऽन्योन्यऽव्यावर्त्तकः। अतस्तत्र रथन्तरप्राप्तित्वावच्छिन्नस्य बृहत्प्राप्तित्वावच्छिन्नस्य च किंचिन्निवृत्तिनियतत्वाभावान्नाव्याप्तिः। तस्माद्युक्तं पूर्वोक्तं लक्षणं नित्यप्राप्तौदासीन्यभिन्नयत्किंचिन्निवृत्तिनियतं यस्य यद्विषयप्राप्तित्वावच्छिन्नं तत्र तत्प्रापिकारी विधिर्नियमविधिः। अवघातस्य हि दार्शपूर्णमासिकेषु व्रीहिषु प्राप्तिराक्षेपिकी वैधी चोभय्यपि नित्यौदासीन्याद्भिन्नस्य विदलनादेर्निवृत्या नियतैव। इयांस्तु विशेषो वैधी प्राप्तिर्नियतया विदलनादिनिवृत्या नियता। आक्षेपिकी तु पाक्षिकयेति। अवघातादिप्राप्तित्वावच्छिन्ने विदलनादिनिवृत्तिनियममात्रं त्ववशिष्टम् यद्यप्यवघातप्राप्तित्वावच्छिन्नं विदलनादिनिवृत्तिनियतं न भवति अग्निचयने औलूखलं सर्वौषधस्य पूरयित्वावहन्ति अथैतदुपदधातीत्युपधेयोलूखलसंस्कारभूतावघातस्य वैतुष्यार्थत्वाभावाद्विदलनादिप्रसक्त्यभावेन तत्रावघातप्राप्तौ सत्यामपि विदलनादिनिवृत्यभावात्तथापि दार्शपौर्णमासिकव्रीह्यवघातप्राप्तित्वाच्छिन्नस्य विदलनादिनिवृत्तिनियतत्वमस्तीति लक्षणानुगतिः। अत एव किंचिद्विषयकत्वं प्राप्तिविशेषणमर्थवत्। एवं च वैकृतेषु रथन्तर-

पृष्ठादिनियमविधिष्वपि नाव्याप्तिः। प्राकृतोत्पत्तिवाक्यतः प्राप्तौ व्यभिचारेण रथन्तरप्राप्तिमात्रस्य बृहदादिनिवृत्तिनियतत्वाभावेऽप्युपहव्यादिषु चोदकात्पाक्षिकी रथन्तरादिप्राप्तिर्या च वैशेषिकेण नियमविधिनौपदेशिकी तत्प्राप्तिस्तस्या द्विविधाया अपि बृहदादिनिवृत्तिनियतत्त्वात्। नचैवं सति विकृतिषु बृहदादिनिवृत्तिनियतप्राप्तिकस्य-रथन्तरादेः प्रकृतौ प्राप्तिकारी विधिरपि नियमविधिः स्यादिति वाच्यम्। न हि यस्य किंचिद्विषयप्राप्तित्वावच्छिन्नमुक्तरूपनिवृत्तिनियतं तस्य यत्र क्वचित्प्राप्तिकारित्वं नियमविलिक्षयामुक्तम्। किं तु यस्य यद्विषयप्राप्तित्वावच्छिन्नमुक्तरूपनिवृत्तिनियतं तस्य यत्र क्वचित्प्राप्तिकारित्वं ततश्च तस्यान्यत्रप्राप्तिकारिणि विधौ कुतो लक्षणातिप्रसङ्गः। नन्ववघातस्य प्रकृतव्रीहिनियतैव वैधी प्राप्तिर्न तु कल्प्यादाक्षेपादनियता काचिदन्या तत्कथमिहोभय्यपि प्राप्तिर्निवृत्तिनियतेति लक्षणं योजितम्। उच्यते अत्र प्रत्यक्षविधितस्तर्कितात्क्षेपतश्च या प्राप्तिः संभाविता सर्वापि प्राप्तित्वेन लक्षणेऽन्तर्गता। तथा चावघाते नियमविधितो नियता तर्कितात्क्षेपतश्च पाक्षिकी संभाविता प्राप्तिः रथन्तरस्य तु वैकृतनियमविधितो नित्यातिदेशतश्च वैकल्पिकी संभाविता प्राप्तिर्विदलनबृहन्नादिनिवृत्तिनियतैव भवेदिति युक्ता लक्षणानुगतिः। एवमेवोदाहरणान्तरेऽपि ज्ञेयम्। नचैवमप्युत्तरेऽहन् द्विरात्रस्य गृह्यत इति षोडशिग्रहनियमविधौ लक्षणाव्याप्तिः। तत्र षोडशिग्रहाप्राप्तिरूपौदासीन्यभिन्नस्य षोडशिग्रहेण सह प्रकृतौ विकल्पतदभावस्य निवृत्तेः षोडशिग्रहप्राप्तौ तदभावनिवृत्तिनियतत्वसद्भावात्। अत एव नित्यौदासीन्यस्य विशेषणं कृतम्। नित्यत्वं च स्वभावसिद्धत्वम् निषेधाप्रयुक्तत्वमिति यावदिति।

तदिदमयुक्तम्। तत्रापूर्वविधिलक्षणस्य नियम्यान्यविषयत्वगर्भत्वोक्त्या नियमविधिलक्षणसापेक्षत्वादपूर्वविधिलक्षणदुदूषयिषयापि

स्वातन्त्र्येणापि च स्वातन्त्र्येणापि तावन्नियमविधिलक्षणं तावद् दूष्यते। तथा हि नित्यप्राप्तौदासीन्यभिन्नकिंचिन्निवृत्तिनियतं यत्र यद्विषयप्राप्तित्वावच्छिन्नं तत्र तत्प्राप्तिकारित्वं हि त्वदुक्तं नियमविधिलक्षणम् । अत्रौदासीन्यभिन्नकिञ्चिदिति किञ्चिच्छब्देन यत्किञ्चिद्विवक्षितम् उत प्रकृतविधिविषयावघाताद्यभावनियतम् । यद्वा नियम्याभावनियतम् । नाद्यः । अवघातादिनियमविधिष्व संभवात् । दार्शपौर्णमासिकव्रीहिष्ववघातप्राप्तित्वावच्छिन्नमवघातविषयौदासीन्याद्भिन्नस्य किंचिच्छब्दवाच्यस्य विशेषादेर्निवृत्त्या नियतं न भवतीति । एवद्दोषनिरासार्थो द्वितीयपक्षोपि न ।

अग्निहोत्रं जुहुयात् स्वर्गकाम इत्याद्यपूर्वविधावतिव्याप्तेः। तथा हि दार्शपौर्णमासिकव्रीहिषु ह्यवघातप्राप्तित्वावच्छिन्नमवघातविषयौदासीन्याद्भिन्नस्य किंचिच्छब्दवाच्यस्यावघाताभावनियतस्य विदलनादेर्निवृत्त्या नियतम् । एवं स्वर्गेऽग्निहोत्रहोमप्राप्तित्वावच्छिन्नहोमविषयौदासीन्याद्भिन्नस्य किंचिच्छब्देन विवक्षितस्य होमाभावानियतस्य भोजनादेर्निवृत्त्या नियतमेवेति। तृतीये त्वात्माश्रयः। नियमविधिविषयस्यैव नियम्यत्वादिति। अनेनैव नियम्यतुल्यकार्यविवक्षापि किंचित्पदे परास्ता। अथैतद्दोषभीत्या प्रकृतविधिविधेयतुल्यकार्यं किंचिच्छब्देनविवक्षितम् । तथाप्यमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्याद्यपूर्वविधावतिव्याप्तिः। एतत्कृता ह्यपराह्णे पिण्डपितृयज्ञप्राप्तिस्तत्काले तु तुल्यकार्यं यत्किञ्चित्कर्मान्तरं तन्निवृत्तिर्नियतैवेति। किंचोक्तलक्षणं व्रीह्यादिद्रव्यनियमविधावव्याप्तम् । यद्विषयप्राप्तित्वावच्छिन्नमित्यनेन व्रीहिविषयप्राप्तित्वावच्छिन्नं ग्राह्यम्। तत्राक्षेपिकी यवमिश्रव्रीहिप्राप्तिरपि संगृहीता स्यात्। न च सा नित्यौदासीन्यभिन्नकिंचिच्छब्देनोक्तानां निवृत्त्या नियतेति। अथैतद्दोषभीत्या यद्विषयेत्यत्र यन्मात्रविषयप्राप्तित्वावच्छिन्नं विवक्ष्यते न चोक्ता यवमिश्रव्रीहिप्राप्तिर्व्रीहिमात्रविषयेति न व्रीहिनियमविध्यादावतिव्याप्तिरिति । तदपि न।

एवमप्येकादश वै पशोरवदानानि इति परिसंख्यायामनिव्याप्तिः। तत्र ह्येऽकादशावदानमात्रविषयप्राप्तित्वावच्छिन्नं नित्यौदासीन्याद्भिन्नस्य किंचिच्छब्दवाच्यस्य पश्ववयवान्तरस्य निवृत्त्या नियतमेव प्रतीयते। व्रीहिप्राप्तित्वावच्छिन्नं यवनिवृत्त्येति। अपि च अत्रेत्यनेन प्रकृतविध्युद्देश्यतावच्छेदकावच्छिन्नं वा गृह्यते। उत यत्किंचिद्धर्मावच्छिन्नमपि। नाद्यः। परिसंख्याविधावतिव्याप्तेः। इमामागृभ्णन्निति विधिकृता ह्यश्वरशनादाने मन्त्रप्राप्तिर्नित्यौदासीन्याद्भिन्नं किंचिद्गर्दभरशनायां मन्त्रपाठस्तन्निवृत्तिनियतैव। प्रातीतिकमेव चात्र निवृत्तिनियतत्वं ग्राह्यं न वास्तवम्। धूमे वह्निनियतत्ववत्। वास्तवग्रहे व्रीहिविधावव्याप्तेः। न हि व्रीहयो यागे यवाभावनियता इति अथैतद्दोषभिया द्वितीयः पक्ष उच्यते। तदपि न। तत्रैवातिव्याप्तेः। इमामिति मन्त्रस्यैव ह्यश्वरशनादान एव रशनादानत्वसामान्यधर्मावच्छिन्ने या प्राप्तिस्तर्किता लैङ्गिकी सा। औदासीन्यभिन्नकिंचिच्छब्दवाच्यस्य प्रकरणेन प्राप्तस्य चयनप्रयोगान्तर्गतस्य यत्र क्वचित्प्रदेशे पाठस्य निवृत्त्या नियतैवेति। तदेवं दृष्टार्थत्वस्य नियमविधिलक्षणस्य पूर्वश्लोकोक्तस्य पूर्वश्लोकदूषणावसर एव दूषितत्वाद्दोषाष्टकग्रस्तत्वाच्चैतच्छ्लोकोक्तस्य नियमविधिलक्षणस्य तदपेक्षमपूर्वविधिलक्षणमपि निरस्तमेवेति। किं च न्यूनत्वेन प्रायशः सर्वेषु नियमविधिष्वसंभव्यायुष्मत्कृतं नियमविधिलक्षणम्। तेन नित्यौदासीन्यभिन्नेतिवत्प्रकृतविधिविषयाङ्गभिन्नेत्यपि किंचिच्छब्दार्थविशेषणं देयम्। अन्यथा अवघातादिप्राप्तिरघाताङ्गनिवृत्तिनियता न भवतीति तत्र तल्लक्षणं न वर्त्तत इति।

विध्यादित्रयलक्षणानि रचितान्याचार्यवर्यैर्गिरा—

कुर्वन्तोऽप्ययदीक्षिता व्यरचयन् सिद्धान्तजाते क्वचित्।

आक्षेपं त्विह कुर्वते बहुमतिष्वेतन्निरासाक्षमा—

स्तद्बोधाय नया मया सुविवृतास्तन्त्रे निगूढा इह ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीण मीमांसाद्वैतसाम्राज्य-
धुरन्धर श्री भट्टनारायणात्मजभट्टशंकरकृतं
विधिरसायनदूषणं समाप्तम् ।

——(:o:)——

# विज्ञापनम् ।

विदितमस्तु तत्रभवतां संस्कृतविद्यारसिकानां यत् काश्यां विश्वेश्वरानुकम्पया शास्त्रमालानाम प्राचीनानाममभिनवानां चाति-दुर्लभानां संस्कृतग्रन्थानां प्रकाशिका ग्रन्थावली प्रचरति ।

| तत्र प्रकाशिता ग्रन्थाः | मूल्यम् |
| --- | --- |
| ( १ ) माध्वभ्रान्तिनिरासः | =) |
| ( २ ) माध्वमुखभङ्गः | ।=) |
| ( ३ ) लिङ्गोपहितलैङ्गिकभाननिरासः | ॥) |

पुस्तकप्राप्तिस्थानम्—

सूर्यनारायण शर्म शुक्लः

गवर्नमेण्ट संस्कृत कालेज,

काशी ।